श्रीगणेशाय नमः।

# वृहद्देवता।

## प्रथमोऽध्यायः ।

मन्त्रदृग्भ्यो नमस्कृत्य समाम्नायानुपूर्वशः ।
सूक्तर्गर्धर्चपादानामृचु[1] वक्ष्यामि दैवतम् ॥ १ ॥
वेदितव्यं दैवतं हि[2] मन्त्रे मन्त्रे प्रयत्नतः ।
दैवतज्ञो हि मन्त्राणां तदर्थमधिगच्छति[3] ॥ २ ॥
तद्विदां[4] तदभिप्रायानृषीणां मन्त्रदृष्टिषु ।
विज्ञापयति विज्ञानं कर्माणि विविधानि च ॥ ३ ॥
न हि कश्चिदविज्ञाय याथातथ्येन दैवतम्[5] ।
लौकिकानां वैदिकानां[6] कर्मणां फलमश्नुते ॥ ४ ॥
प्रथमो भजते त्वासां वर्गोऽग्निमिह दैवतम् ।
द्वितीयो वायुमिन्द्रं वा तृतीयः सूर्यमेव च[7] ॥ ५ ॥
अर्थमिच्छन्नृषिर्देवं यं यमाहायमस्त्विति ।

---

(१) ऋग्भ्य इति ख० ग० ङ० ।
(२) वेदितव्यं हि तत् सर्व्वमिति क० घ० ।
(३) तदर्थमविगच्छति इति ख० ।
(४) तद्विद्वानिति ख० घ० ।
(५) देवताः इति क० घ० ।
(६) लौक्यानां वैदिकाना वा इति ख० ग० ङ० ।
(७) सूर्य्यमेव तु इति क० घ० ।

प्राधान्येन स्तुवन्कृत्वा[1] मन्त्रस्तद्दैव एव सः ॥ ६ ॥
स्तुतिस्तु नाम्ना रूपेण कर्मणा बान्धवेन च ।
स्वर्गायुर्धनपुत्राद्यैरर्थैराशीस्तु कथ्यते ॥ ७ ॥
स्तुत्याशिषौ तु यास्वृक्षु दृश्येते[2]ऽल्पास्तु ता इह ।
ताभ्यस्त्वान्यतरास्ता स्युः स्वर्गो याभिस्तु याच्यते ॥ ८ ॥
स्तुवन्त[3] वेद सर्वोऽयमर्थयत्येष मामिति ।
स्तौतीत्यर्थं ब्रुवन्तश्च सार्थं मामेष[4] पश्यति ॥ ९ ॥
स्तुवद्भिश्च ब्रुवद्भिश्च ऋषिभिस्तत्त्वदर्शिभिः[5] ।
भवत्युभय[6]मेवोक्तमुभयं ह्यर्थतः समम् ॥ १० ॥
मन्त्रे च देवतानाम यस्मिन्मन्त्रे प्रदृश्यते[7] ।
तमेवाहुः सुधियस्तं मन्त्रं तद्दैवमन्यदा ॥ ११ ॥
तस्मात्तद्दैवतानाम्ना[8] मन्त्रे मन्त्रे प्रयोगवित्[9] ।
बहुत्वमभिधानाञ्च[10] प्रयत्नेनोपलक्षयेत् ॥ १२ ॥

---

(१) स्तुवन् मन्त्रोति ग॰ घ॰ ।
(२) स्तुत्याशिषस्तु यास्वृक्षु दृश्यन्ते इति क॰ ख॰ ।
(३) स्तुवंति इति ख॰ ङ॰ ।
(४) योऽर्थमामेव इति क॰ ।
(५) स्तुवद्भिर्वा ब्रुवद्भिर्वा ऋषिभिर्मन्त्रदर्शिभिरिति ख॰ । मन्त्रैस्तथार्थानुदर्शिभिरिति क॰ ग॰ ।
(६) भवत्युभयमिति क॰ घ॰ ।
(७) मन्त्रेऽभिधीयते इति ख॰ ग॰ ङ॰ ।
(८) तस्मात्तु देवनामास्य इति घ॰, तस्मात्तु देवतां नाम्ना इति ख॰ ग॰ ।
(९) प्रयत्नत इति घ॰ ।
(१०) बहुत्वमभिधानस्य इति क॰ ख॰ ।

सम्पूर्णमृषिवाक्यं तु सूक्तमित्यभिधीयते ।
दृश्यन्ते देवता यस्मिन्नेकस्य(१) बह्वृषु द्वयोः ॥ १३ ॥
देवतार्षार्थच्छन्दोभ्यो(२) वैविध्यं तस्य जायते(३) ।
ऋषिसूक्तन्तु यावन्ति सूक्तान्येकस्य(४) वै स्तुतिः ॥ १४ ॥
देवतैका तु यावत्सु देवतायास्तदुच्यते(५) ।
यावदर्थसमाप्तिः स्यादर्थसूक्तं वदन्ति तत् ॥ १५ ॥
समानच्छन्दसो यास्तु(६) तच्छन्दःसूक्तमुच्यते ।
वैविध्यमेतत्सूक्तानामिह(७) विद्याद्यथातथम् ॥ १६ ॥
देवतानामधेयानि मन्त्रेषु त्रिविधानि तु ।
सूक्तभाञ्ज्यथ ऋग्भाञ्जि तथा नैपातिकानि तु ॥ १७ ॥
सूक्तभाञ्जि भजन्ते वै सूक्तान्यृग्भाञ्जि वै(८) ऋचः ।
मन्त्रेऽन्यदैवतेऽन्यानि(९) निगद्यन्ते प्रसङ्गतः(१०) ॥ १८ ॥

---

(१) त्रिवं तद्दृश्यते यस्मिन्नेतस्यामिति क० घ० । एकस्येत्यत्र एकस्मिन्निति घ० ।
(२) देवतार्षार्थच्छन्दस्तः इति ख० ।
(३) वैविध्यस्य प्रजायते इति ख० ग० ङ० ।
(४) ऋषिसूक्तानि तान्यत्र यावन्त्येकस्येति क० घ० ।
(५) अस्मिन् श्लोकार्द्धस्थले ख० ग० ङ० पुस्तकेषु श्रूयन्ते तानि सर्व्वाणि ऋषेः सूक्तं हि तस्य तत् इति पाठो वर्त्तते ।
(६) याः स्युरिति ख० ग० ङ० ।
(७) वैविध्यमेवं सूक्तानामिहेति ख० ग० ङ० ।
(८) वै इत्यत्र यैरिति क० ख० घ० ङ० ।
(९) यानि इति घ० ।
(१०) निगद्यन्तेऽत्र कानिचित् इति ख० ग० पुस्तकान्तरस्थ ।

सालोक्यात्साहचर्याद्वा तानि नैपातिकानि तु ।
तस्मादृक्प्रकारेऽपि[१] सूक्ते स्यात्सूक्तभागिनी ॥ १९ ॥
देवता तद्यथासूक्तमविशेषं[२] प्रतीयते ।
भिन्ने सूक्ते[३] वदेदेव देवतामिह लिङ्गतः ॥ २० ॥
तत्र तत्र यथावच्च मन्त्रान् कर्मसु[४] योजयेत् ।
देवतायाः परिज्ञानात्तद्धि कर्म समृध्यते ॥ २१ ॥
आद्यन्तयोस्तु सूक्तानां प्रसङ्गपरिकीर्त्तनात् ।
सोऽभिर्देवताभाक्ता उपेक्षेतेह[५] मन्त्रवित् ॥ २२ ॥
तत् स्वाध्याङ्कः कतिभ्यस्तु कर्मभ्यो नाम जायते ।
सत्त्वानां[६] वैदिकानां च[७] यदन्यदिह[८] किञ्चन ॥ २३ ॥
नवभ्य इति तेरुक्ताः पुराणाः[९] कवयश्च ये ।
मधुकः श्वेतकेतुश्च[१०] गालवश्चैव मन्यते[११] ॥ २४ ॥
निवासात्कर्मणो रूपान्मङ्गलाद्वाच आशिषः ।

---

(१) तङ्ग्रकारेऽपि इति क० ङ० घ० ।
(२) अविशेष्येति ख०, अविशेष्यमिति ग० ङ० पुस्तकान्तरञ्च ।
(३) भिन्नसूक्ते इति क० घ० ।
(४) कर्म प्रयोजयेदिति ख० ।
(५) देवताभासा उपेक्षेतेह इति ख० । देवताभासामपेक्षेतेह इति क० घ० ।
(६) सत्त्वानामिति क० ।
(७) वा इति क० ग० ।
(८) यदान्यदिहेति क० घ० ।
(९) पौराणा इति क० घ० ।
(१०) मधुकाश्च श्वेताश्चेति क० घ० ।
(११) मन्यते इति क० ख० घ० ङ० ।

यदृच्छयोपवसना[१]त्तथामुष्यायणाच्चयात्[२] ॥ २५ ॥
चतुर्थं इति तत्राहुर्यास्कगार्ग्यरथीतराः[३] ।
आशिषोऽथार्थवैरूप्या[४] द्वाचः कर्मण एव च ॥ २६ ॥
सर्वाण्येतानि नामानि कर्मणस्त्वाह[५] शौनकः ।
आशीरूपञ्च वाक्यञ्च[६] सर्वं भवति कर्मतः ॥ २७ ॥
यदृच्छयोपवसना[७] त्तथामुष्यायणाच्च[८] यत् ।
तथा तदपि कर्मैव तच्छृणुध्वन्तु[९] हेतुतः[१०] ॥ २८ ॥
प्रजाः कर्मसमुत्था[११] हि कर्मतः सत्वसङ्गतिः[१२] ।
क्वचित् संज्ञायते[१३] सत्त्व निवासात्तत्प्रजायते[१४] ॥२९॥
यादृच्छिकं तु नामाभिधीयते[१५] त्विह कुत्रचित्[१६] ।

---

(१) यदृच्छयोपवचनादिति क॰ ङ॰ घ॰ ।
(२) तथा म्थ्यायणाच्चेति क॰ घ॰ ।
(३) रथन्तरा इति ख॰ ।
(४) आशिषोऽथ च वैरूप्यात् इति क॰ घ॰ । आशिषोऽर्थवैरूप्यादिति ख॰ ङ॰ ।
(५) कर्मतस्त्वाह इति क॰ ग॰ ।
(६) वाक्यञ्च इति ख॰ ग॰ ङ॰ ।
(७) यदृच्छयोपवचनादिति ख॰ ।
(८) यदृच्छया निवासाच्च यद्वा म्थ्यायणाच्चेति क॰ घ॰ ।
(९) तच्छृणु त्वं च इति ग॰ ।
(१०) हेतवः इति ख॰ ग॰ ङ॰ पुस्तकान्तरञ्च ।
(११) प्रजाकर्मसमुत्था इति क॰ ख॰ ।
(१२) कर्मणः सत्र जायते इति क॰, सत्वगा गति॰ इति ख॰ ।
(१३) सतो निवसते इति क॰ घ॰, क्वचित् स जायते इति ग॰ ।
(१४) तत्र जायते इति घ॰ ।
(१५) नाम नामाधीयते इति ख॰ । यादृच्छिकं नाम नाम धीयते ङ॰ घ॰ ।
(१६) यत्र कुत्रचिदिति ख॰, यच्चिह क्वचिदिति घ॰ ।

औपम्यादेव[१] तद्विद्याद्[२] भावस्त्वेवेह कस्यचित् ॥ २० ॥
नाकर्मकोऽस्ति भावो हि न[३] नामास्ति[४] निरर्थकम् ।
नान्यत्र भावान्नामानि तस्मात्सर्वाणि कर्मतः ॥ २१ ॥
मङ्गलात् क्रियते यत्तु नामोपचयनाच्च[५] यत् ।
भवत्येव तु सा ह्याशीः स्वस्त्यादेर्मङ्गलानि च[६] ॥ २२ ॥
अपि कुत्सितनामाय[७]सिद्ध[८] जीवेत्कथञ्चिरम् ।
इति क्रियन्ते नामानि भूतानां विदितान्यपि[९] ॥ २३ ॥
मन्त्रा नानाप्रकाराः स्युर्दृष्टा वै[१०] मन्त्रदर्शिभिः ।
स्तुत्या चैव विभूत्या च वाक्प्रभावेण चात्मनः[११] ॥ २४ ॥
स्तुतिः प्रशंसा निन्दा च संशयः परिदेवना[१२] ।
स्पृहाशीः कत्थना याञ्चा[१३]प्रश्नः प्रैषः प्रवह्लिका[१४] ॥ २५ ॥
नियोगश्चानुयोगश्च श्लाघा विलपितञ्च यत् ।

---

(१) औपम्यादर्थमिति ख०, औपम्यादिह इति ग० घ० ङ० ।
(२) तद्वक्ते इति घ० ।
(३) ना इति घ० ।
(४) तन्नामाह निरर्थकमिति ख० ।
(५) यच नामोपचयनच इति क० ख० घ० ।
(६) चाशास्ते मङ्गलानि च इति क० घ० । मङ्गलादिहेति ख० ङ० ।
(७) अपिकित्सितनामायमिति ख० ।
(८) अपि इति घ० ।
(९) निन्दितान्यपि इति क० घ० ।
(१०) ये इति ग० ङ० पुस्तकान्तरच ।
(११) प्रभावाद्देवतात्मन इति ख० ग० चान्यत्पुस्तकच ।
(१२) परिवेदना इति क० ङ० ।
(१३) कथनायाचेति क० ।
(१४) प्रवल्हिका इति ख० ग० ।

आचिख्यासा[1]ऽथ संलापाः परिचाख्यान[2]मेव च ॥ ३६ ॥
आह्वसख्या नमस्कारः प्रतिरोध[3]स्तथैव च।
सङ्कल्पश्च प्रलापश्च प्रतिवाक्यश्च नाम यत्[4] ॥ ३७ ॥
प्रतिषेधोपदेशौ च प्रमादापह्नवौ च यत्[5]।
उपप्रैषश्च यः प्रोक्तः सञ्ज्वरो नाम[6] विस्मयः ॥ ३८ ॥
आक्रोशोऽभिलपश्चैवा[7]क्षेपः शापस्तथैव च।
उपसर्गा निपातश्च[8] नाम चाख्यातमित्यपि[9] ॥ ३९ ॥
भूतं भव्यं भविष्यच्च पुमांस्त्रीच[10]नपुंसकम्।
एवंप्रकृतयो मन्त्राः सर्ववेदेष्विति स्थितिः[11] ॥ ४० ॥
तेषां निदर्शनार्थाया[12] ऋचोऽर्धर्चाः पदानि च।
ब्राह्मणे चाथ कल्पे च निगद्यन्तेऽत्र कानिचित्[13] ॥ ४१ ॥

---

(१) आविख्यासेति ख०।
(२) सल्लापा परिचाख्यान इति घ०।
(३) प्रतिरोधः इति घ० प्रतिषेध इति अन्यत्पुस्तकच।
(४) तथैव च इति ग० अन्यत्पुस्तकच।
(५) च ह इति ग० अन्यत्पुस्तकच।
(६) यस्य इति ख० ग० ङ० अन्यत्पुस्तकच।
(७) आक्रोशोऽभिलपश्चैव इति ग० अन्यत्पुस्तकच, आक्रोशोऽभिलषश्चैव इति ख०।
(८) उपसर्गा निपाताश्चेति क० घ०, उपसर्गा निपातश्चेति ख०।
(९) चाख्यानमेव चेति क०।
(१०) स्त्री च इति ग० अन्यत्पुस्तकच।
(११) सर्ववेदेषु सर्वश इति ख० ग० ङ० अन्यत्पुस्तकच। सर्ववेदेष्विति स्थितिरिति घ०।
(१२) वाक्यार्थदर्शनार्थाया इति ङ० अन्यत्पुस्तकच।
(१३) विधौ कल्पे च देवे च निगद्यन्तेऽत्र कानिचिदिति क० घ०।

शब्देनोच्चरितेनेह येन द्रव्यं प्रतीयते ।
तदाक्षरविधौ युक्तं नामेत्याहुर्मनीषिणः ॥ ४२ ॥
अष्टौ यत्र प्रयुज्यन्ते नानार्थेषु विभक्तयः[१] ।
तन्नाम कवयः प्राहुर्भेदे वचनलिङ्गयोः ॥ ४३ ॥

क्रियासु बह्वीष्वभिसंश्रितो यः
पूर्वापरीभूत इहैक एव ।
क्रियाभिनिर्वृत्तिवशेन सिद्ध
आख्यातशब्देन तमर्थमाहुः ॥ ४४ ॥

क्रियाभिनिर्वृत्तिवशोपजातः
कृदन्तशब्दाभिहितो यदा स्यात् ।
संख्याविभक्त्यव्ययलिङ्गयुक्तो
भावस्तदा द्रव्यमिवोपलक्ष्यः[२] ॥ ४५ ॥

यथा नानाविधैः शब्दैरपश्यन्नृषयः पुरा ।
विविधान्यपि[३] वाक्यानि तान्यनुक्रमतः शृणु ॥ ४६ ॥
रूपादिभिः स्तुतिः प्रोक्ताऽऽशीः[४] स्वर्गादिभिस्तथा ।
यानि वाक्यान्यतोऽन्यानि[५] तान्यपि स्युरनेकधा ॥ ४७ ॥

---

(१) विभक्तय इति ग॰ धृतपुस्तकस्य।
(२) शब्देनेत्यादि भावस्तदा द्रव्यमिवोपलक्ष्य इत्यन्तः सन्दर्भः ख॰ घ॰ चिह्नितपुस्तकयोर्नोपलभ्यते।
(३) विविधानीह इति ख॰ ग॰ घ॰।
(४) आशीरिति क॰ ख॰ ग॰।
(५) यानि इति धृतपुस्तकस्य।

मन्त्रे[१] प्रशंसा[क] भोजस्य[२] चित्रद्[ख] सौभरेः[३][ग]स्तुतिः ।
आक्रोशार्यास्तु दृश्यन्ते [घ]माता चेत्यभिमेषति[४] ॥४८॥
ऋज्रोपमन्तं[ङ] निन्दा च[५] शापो[च] येमेत्यृगेव तु ।
याञ्ञा[६] [छ]यदिन्द्रचिचेति चेषो भीदमिति त्वृचि ॥४९॥
आशीस्तु[ज] वात आवातु दण्डेति परिदेवना[७] ।
प्रश्नश्च प्रतिवाक्यश्च[झ] पृच्छामि त्वेत्यृचौ पृथक् ॥५०॥
संशयोऽधःस्विदासीच्च[ञ] कत्थना[८] स्या[ट]दहं मनुः ।
इमं नो[ठ] यज्ञमित्यस्यां[ड] नियोगः[९] पाद उच्यते[१०] ॥५१॥

---

(१) मन्त्र इति क॰ घ॰ ।

(२) प्रसङ्गाद्भोजस्य इति क॰ घ॰ मन्त्रप्रशंसा भोजस्येति ग॰ ।

(३) सौभरस्तुतिरिति ख॰ ।

(४) मा नामेत्याभिमेष्यति इति ख॰, माता मेत्यभिमेषति इति क॰ ङ॰ ।

(५) ऋग्मोपमनतिदाच इति ख॰ ।

(६) यास्या इति ख॰, याच्या इति ग॰, यच्ना इति घ॰ ङ॰ ।

(७) दण्डादिपरिवेदना इति घ॰, दखेतिपरिवेदना इति ख॰ च॰ ।

(८) संशयोध स्विदासीदित्थकायना इति क॰ घ॰, कच्छना इति ङ॰ ।

(९) यज्ञमित्याद्यानियोग॰ इति ख॰ ।

(१०) उत्तमे इति क॰ घ॰ ।

---

(क) ऋ॰ १०,१०७,१० । (ख) ऋ॰ ८,२१,१८ । (ग) ऋ॰ ८,१९, २ । (घ) ऋ॰ १,१६०, २१, १८५, १० । (ङ) ऋ॰ १०, ११७, ६ । (च) ऋ॰ ८, २७,२० । (छ) ऋ॰ ५,३९, १ । (ज) ऋ॰ १०,१८६, १ । (झ) ऋ॰ १, १६४, ३४ । (ञ) ऋ॰ १०, १२९, ५ । (ट) ऋ॰ ४, २६, १ । (ठ) ऋ॰ १, १, ४ । (ड) ऋ॰ १, २६, १ ।

[क]इह ब्रवीत्यनुयोगः संलाप[१]स्तृगुपोपसे[२][ख] ।
प्रतिषेधोपदेशौ[३] तु अचैर्मेत्य[ग]चर्षंस्तुतौ[४] ॥५२॥
आख्यान[५]न्तु हये जाये[घ] विलापस्तु[६]नदस्य मा[ङ] ।
अभीरामिव मा[च] श्लाघा[७] सुदेव इति[छ] तु स्मृता ॥५३॥
नमस्कार.[ज] प्रनु वोचे,[८] नमस्ते अस्तु विद्युते ।
सङ्कल्पयन्विद तुभ्योऽह स्यामिति यदुच्यते[९] ॥५४॥
सङ्कल्पस्तु[झ] यदिन्द्राह प्रलापस्त्वेतमस्य तु.[ञ][१०] ।
महानन्याहनस्था तु प्रतिरोधो भुगित्युत[११] ॥५५॥

---

(१) सल्लाप इति क॰ ग॰ घ॰ ।
(२) त्वगुपोपमे इति ख॰ ग॰ अन्यत्पुस्तकाच्च ।
(३) प्रतिषेधामदेशौ इति घ॰ ङ॰ ।
(४) अच्छेरित्यच्चर्षंस्तुत, इति घ॰ ।
(५) आख्यानमिति पुस्तकान्तरम् ।
(६) स्यादिति ख॰ ग॰ पुस्तकान्तरञ्च ।
(७) अभीरामात्मन श्लाघा इति ख॰ ग॰ घ॰ ।
(८) नमस्कारो मत न्रमे इति क॰ घ॰ प्रेव इति ख॰, प्रेवे इति ङ॰ ।
(९) या कल्पयन्ति नो रय परिचाह्लमिह ते इति क॰ ।
(१०) च इति ख॰ ग॰ ङ॰ पुस्तकान्तरञ्च ।
(११) महानन्याह मध्यास्थात्प्रतिरोगो भुगित्यपि इति ख॰, भुगि-
　　त्यपि इति ग॰, भुगित्यमि इति पुस्तकान्तरं ।

---

(क) ऋ॰ १, ३५, ६ । (ख) ऋ॰ ८, ८२, ४ । (ग) ऋ॰ १०, ३४, १३ । (घ) ऋ॰ १०, ९५, १ । (ङ) १, १७९, ४ । (च) ऋ॰ १०, ८६, ६ । (छ) ऋ॰ १०, ९४, १४ । (ज) ऋ॰ १, २४, १२, १३ । (झ) ऋ॰ ८, १४, १ । (ञ) ऋ॰ ६, १५, ४ ।

प्रमादस्त्वेष[1]हन्ताहं[क] नमस्व[ख] इत्यभिप्लवः[2]।
इन्द्राकुत्सेत्युपप्रैषो[ग][3] न विजानामि[घ] संज्वरः ॥ ५६ ॥
होतापक्षदिति प्रैषः[4] को अद्धेति तु विस्मयः।
आमस्य[5]पक्ववो नेति वितताद्रिः[6] प्रवह्लिका[7] ॥ ५७ ॥
[ङ]न मृत्युरासीदित्येतामाचिख्यासां[7] प्रचक्षते[8]।
अभिशापो[9]प्रजाः सन्तु भद्र[10]माशीस्तु[च] गौतमे[11] ॥ ५८ ॥
बह्वप्येवं प्रकार[12]न्तु शक्यं द्रष्टुमिहार्षजम्[13]।

---

(१) प्रमोदस्त्वेष इति घ०।
(२) प्रमादस्त्वेकहन्ताहं नमस्व इत्यभ्दव इति ख०, नमस्व इत्यमभ्दवः इति ग०।
(३) इन्द्राकुत्सेत्ययप्रैषो इति ख०, इन्द्राभरेत्युपप्रैषो इति क० ङ०।
(४) होतापक्षदितिप्रैषा इति ख०।
(५) आमये इति घ०, आमस्तु इति ग०, यामस्तु इति ख०।
(६) प्रवह्लिका इति ख० ग०।
(७) माचिख्यासमिति क०, माविख्यासामिति ख०,माचिख्यासमिति घ०।
(८) प्रचक्ष्वे इति क०, प्रचक्षमे इति ख०।
(९) आविशापोः इति ख०।
(१०) भद्रमिति ख०।
(११) इगौतमे इति ख०।
(१२) भक्षमेव प्रकारमिति ख०।
(१३) इतीहार्षमिति ख० ग० पुस्तकान्तरस्थ।

---

(क) ऋ० १०, ११९, ९। (ख) ऋ० ७, ३८, १०। (ग) ऋ० ५, ३१, ९। (घ) ऋ० १, १६४, ३७। (ङ) ऋ० १, १५२, ३। (च) ऋ० १०, १२९, २। (छ) ऋ० १, ७९, १०।

वक्तुं प्रयोगतश्चैषामृक्सूक्तार्धर्चसंश्रितम्[१] ॥ ५९ ॥

एते तु मन्त्रवाक्यार्था देवतां सूक्तभागिनीम्[२] ।

संश्रयन्ते[३] यथान्याय स्तुतिस्त्वानुमानिकी[४] ॥ ६० ॥

भवद्भूत भविष्यच्च जङ्गमं स्थावरञ्च यत्[५] ।

अस्यैके[६]सूर्यमेवैकं प्रभव प्रलयं विदुः ॥ ६१ ॥

[क]असतश्च [ख]सतश्चैव [ग]योनिरेषा[७] [घ]प्रजापतिः ।

त्यद[ङ]क्षरञ्च[च]वाच्य[छ]ञ्च यथैत[८]द्ब्रह्म[९]शाश्वतम् ॥ ६२ ॥

कृत्वैव[१०] हि[ज] त्रिधा[झ]त्मानमेषु लोकेषु [ञ]तिष्ठति ।

---

(१) ऋक्सूक्तार्धर्चमाश्रितमिति इति क०, चैषा ऋक्सूक्तार्धर्चसंश्रितमिति ख० ।

(२) देवताः सूक्तभागिनामिति क० घ०, देवता सूक्तभागिनी इति ख० ।

(३) संभूयते इति ख० ।

(४) स्त्वा चानुमानिकी इति ख०, तत्रानुमानिकी इति घ० ।

(५) भवद्भूतस्य भव्यस्य जङ्गमस्थावरस्य च इति ख० ग० पुस्तकान्तरञ्च ।

(६) एके इति क० घ० ।

(७) एषामिति क० ।

(८) यदक्षरञ्च वाच्यमिति ग०, वाक्यमिति ङ० पुस्तकान्तरञ्च ।

(९) यथैतद्ब्रह्म इति ग० ङ० पुस्तकान्तरञ्च ।

(१०) कृत्वैव इति ख० ग० पुस्तकान्तरञ्च ।

---

(क) ऋ० ४, १२, ४ । (ख) ऋ० १, ३६, २ । (ग) ऋ० १, १०४, १ । (घ) ऋ० ४ ५१, २ । (ङ) ऋ० १, १६४, ४२ । (च) ऋ० ६, ३७, १ । (छ) ऋ० १, १०, ४ । (ज) ऋ० १, ११७, २४ । (झ) ऋ० १, १६६, ६ । (ञ) ऋ० १, ३१, ११ ।

(क)देवान् यथायथं(ख) सर्वान् निवेश्य(ग) स्वेषु(घ) रश्मिषु ॥ ६३ ॥
एतद्भूतेषु(१) लोकेषु अग्निभूतं स्थितं त्रिधा।
(ङ)ऋषयो (च)गीर्भि(छ)रर्चन्ति व्यश्रितं(२) (ज)नामभि(झ)स्त्रिभिः॥ ६४ ॥
तिष्ठत्येव च(३) (ञ) भूतानां(ट) जठरे जठरे ज्वलन्।
विश्वानं चैनमर्चन्ति होत्रायां(ठ) शुक्रवर्हिषः ॥ ६५ ॥
इहैव(ड) पवमानो(ढ)ऽग्नि(ण)र्मध्यमोऽग्निस्तु(त) पावकः(५)।
अमुष्मिन्नेव(६) विभैत्तु लोकेऽग्निः(त) शुचिरुच्यते ॥ ६६ ॥
इत्यग्निभूतस्त्वृषिभिर्लोके स्तुतिभिरीडितः(७)।
(थ)जातवेदाः स्तुतो मध्ये स्तुतो(द) वैश्वानरो दिवि ॥ ६७ ॥

---

(१) एतमेवैषु इति क० घ० ।
(२) व्यश्नितमिति छ० घ० पुस्तकान्तरे च।
(३) एष च इति ख०, एष हीति ग० पुस्तकान्तरे च।
(४) पवमानामिरिति क० घ०।
(५) वनस्पतिरिति ख० ग० ङ० पुस्तकान्तरे च।
(६) अमुष्मिन्नेव इति ग० छ० पुस्तकान्तरे च।
(७) ईळितः इति क० ख० छ०।

---

(क) ऋ० १, १, २। (ख) ऋ० १, १६१, ८। (ग) ऋ० ८, ८४, ८। (घ) ऋ० १, १३४, ४। (ङ) ऋ० १, ४८, १४। (च) १, ६, ६। (छ) ऋ० १, १०, १। (ज) ऋ० १, १५५, ६। (झ) ऋ० ८, ५६, ५। (ञ) ऋ० ३, २३, ६। (ट) ऋ० १, १०४, ६। (ठ) ऋ० १, ३, २। (ड) ऋ० ८, १०१, १४। (ढ) ऋ० १, १, ७। (ण) ऋ० १, ६०, ४। (त) ऋ० १, ६६, २। (थ) ऋ० १, ७७, ५। (द) १, ५९, ६।

(क)रसान् रश्मिभि(ख)रादाय(ग) वायुनाऽयं गतः सह[१] ।
(घ)वर्षत्येष च यल्लोके(ङ) तेने(च)न्द्र (छ)इति स स्मृतः[२] ॥ ६८ ॥
(ज)अग्नि(झ)रस्मि(ञ)न्नथेन्द्रस्तु मध्यमो[३](ट)वायुरेव च ।
(ठ)सूर्यो (ड)दिवीति विज्ञेयास्तिस्र एवेह[४] देवताः ॥ ६९ ॥
एतासामेव माहात्म्यान्नामान्यत्वं विधीयते ।
तत्तत्स्थानविभागेन तत्र तत्रोपलक्षयेत्[५] ॥ ७० ॥
(ढ)तासा(ण)मियं (त)विभूतिर्हि (थ)नामानि यदनेकशः ।
(द)आहुस्तास्वासु मन्त्रेषु(ध) कवयोऽन्योऽन्ययोनिताम्[६] ॥ ७१ ॥
यथास्थानं(न) प्रदिष्टास्ता[७] सामान्येन देवताः ।

---

(१) सह संभृत इति क० घ० ।
(२) तु स्मृत इति क० घ० ।
(३) मध्यत इति ग० ।
(४) एवहि इति क० घ० ।
(५) तत्र तत्रैव दृश्यते इति ग० ङ० पुस्तकान्तरयोः ।
(६) अन्योऽन्ययोनितामिति ख० ।
(७) स्तु इति क० ।

---

(क) ऋ० १, १६, ८ । (ख) ऋ० ४, २६, ६ । (ग) ऋ० १, १४, १० ।
(घ) ऋ० ५, ८४, ३ । (ङ) ऋ० १, २१, ६ । (च) ऋ० १, २, ५ ।
(छ) ऋ० १, १०६, ३ । (ज) ऋ० १, १, २ । (झ) ऋ० १, ९, ९ ।
(ञ) ऋ० १, ४, ३ । (ट) ऋ० १, १३४, ३ । (ठ) ऋ० १, २३, १० ।
(ड) ऋ० १, ६, १ । (ढ) ऋ० १, ३२, ८ । (ण) ऋ० १, ४८, ७ ।
(त) ऋ० १, ३०, ५ । (थ) ऋ० १, ७२, ३ । (द) ऋ० १, ११८, ३ ।
(ध) ऋ० ५, ३०, ८ । (न) ऋ० ३, २०, १२ ।

तद्भक्तास्तत्प्रधानाश्च(क) केचिदेवं वदन्ति ताः(१) ॥ ७१ ॥
(ख)पृथक् (ग)पुरस्ताद्ये तूक्ता(२) लोकादिपतय(घ)(३)स्त्रयः ।
(ङ)तेषा(च)मात्मैव तत्त्वं यद्यद्भक्तिः प्रकीर्त्यते(४) ॥ ७२ ॥
तेजस्त्वे(छ) वायुधं(५) प्राक्वाहनञ्चैव तस्य तत्(६) ।
(ज)इमामेन्द्रीश्च (झ)दिव्याश्च (ञ)वाचमेवं पृथक् स्तुताम् ॥ ७४ ॥
यज्ञदेवतायाः (ट)स्तुतयो दृष्टाः स्तुतयश्च(७) याः ।
प्राधान्यमेव सर्व्वासु(८) पत्नीनामेव(९)(ठ) तास्वपि ॥ ७५ ॥

---

(१) नैवं केचिद्वदन्ति तु इति क० घ०, तु इत्यत्र ता इति पुस्तकान्तरं ।
(२) येत्यूक्ता इति ख०, पुरस्ताद्येत्यक्ता इति घ० ।
(३) लोकाधिपतय इति क० घ ।
(४) यदन्यद्भक्ति कीर्त्यते इति क० घ० ।
(५) तेजस्त्वे वायव इति क० ङ०, वायवा इति ग० । तेजस्वे वायवा इति ख०, ।
(६) यस्य यत् इति क० ख० ग० ङ० पुस्तकान्तरञ्च ।
(७) दिवत्सं स्तुतयश्च इति ग० ङ० पुस्तकान्तरञ्च, दिवत्सं स्ततयश्च इति ख० ।
(८) प्राधान्यमेवां भूतानां इति क० घ० ।
(९) इव इति ख० ग० ङ० ।

---

(क) ऋ० ५, ३०, २ । (ख) ऋ० १, १३१, २ । (ग) ऋ० १, १२३, १० । (घ) ऋ० १, ३३, २ । (ङ) ऋ० १, ७, १ । (च) ऋ० १, ११५, १ । (छ) ऋ० ३, २४, ३ । (ज) ऋ० १, ३१, १६ । (झ) ऋ० ८, ९०, १० । (ञ) ऋ० १, ३०, ६ । (ट) ऋ० ६, ३३, १ । (ठ) ऋ० ७, २८, ८ ।

[क]स्यान [ख]नामानि भक्तीश्च[१] देवतायाः स्तुतौ स्तुतौ ।
सम्वादयन्नुपेक्षेत[२]याङ्काश्चिदिह सम्पदम् ॥ ७६ ॥
अग्निभक्तिषु तान् सर्वान्[ग]ग्नावेव[३] समापयेत् ।
यदिन्द्रभक्ति तत्त्वेन्द्रे[४] [घ]सूर्ये[५] सूर्यानुगञ्च[ङ] यत् ॥ ७७ ॥
निरूप्यते[६] हवि[च]र्यस्मै[७] सूक्तन्तु [छ]भजते च [ज]या ।
[झ]सैव [ञ]तत्र प्रधानं स्यान्[८]निपातेन [ट]या [ठ]स्तुता ॥७८॥
[ड]इति[९]वक्ष्याम्येतेषां[१०] [ढ]सूक्त सामासिको विधिः ।
समासेनैवसूक्तस्तु[११] विस्तरेण त्वनुक्रमम्[१२] ॥ ७९ ॥

---

(१) भक्तिश्चेति क॰ ख॰ ।
(२) सवादो यन्नपेक्षेत इति क॰ ।
(३) या सर्व्वांसमावेव इति क॰ ।
(४) यदिन्द्रभक्तिसत्त्वेन्द्रे इति क॰ ख॰ ।
(५) सौर्य्ये इति ख॰ पुस्तकान्तरञ्च ।
(६) निरूप्यत इति ख॰ ।
(७) यस्मै इति ख॰ ।
(८) तत्र तत्र प्रधानोऽसौ न इति क॰ ख॰ ।
(९) इह इति क॰ ख॰ ।
(१०) एवैषामिति ग॰ ।
(११) समासयन्तु तत्सर्व्वमिति क॰ ख॰ ।
(१२) अनुक्रमादिति ख॰ ।

---

(क) ऋ॰ ४, ७६, ४ । (ख) ऋ॰ १, ७२, ३ । (ग) ऋ॰ १, १२४, १ । (घ) ऋ॰ १, २३, १७ । (ङ) ऋ॰ १, १, ६ । (च) ऋ॰ १, १२, १ । (छ) ऋ॰ १, ६४, २ । (ज) ऋ॰ १, १२३, ४ । (झ) ऋ॰ १, २२, २ । (ञ) ऋ॰ १, ४८, १० । (ट) ऋ॰ १, ६, ६ । (ठ) ऋ॰ १, १७, ६ । (ड) ऋ॰ १, २२, १७ । (ढ) ऋ॰ ८, ६७, ७ ।

अवश्यं वेदितव्यो हि नाम्ना(१) (क)सर्वस्य विस्तरः ।
न हि (ख)सामान्यविज्ञाय (ग)मन्त्राः शक्या हि वेदितुम् ॥८०॥
सत्वान्यमूर्त्तान्यपि च (घ)देवता च(२) महर्षयः ।
तुष्टुवुर्ऋषयः प्रीत्या(३)(ङ) तासु तासु स्तुतिष्विह(च) ॥८१॥
यैस्त्वग्नि(४)(छ)रिन्द्रः (ज)सोमश्च (झ)वायुः (ञ)सूर्यो (ट)बृहस्पतिः ।
(ठ)चन्द्रोऽथ(ड)विष्णुः(ढ)पर्जन्यः(ण)पूषा वा(५)(त)ऽप्यृभवो(६)(थ)ऽश्विनौ॥८२
(द)रोदसी (ध)मरुतो (न)देवाः(७) (प)पृथिव्यापः (फ)प्रजापतिः ।

---

(१) नाम्नां इति क० ङ०, नाम्नः इति घ० ।
(२) देवतावदिति क० घ० ।
(३) तुष्टुवुश्च प्रशंसयेति क० घ० ।
(४) यैरग्निरिति घ० ।
(५) वा इति ख० ङ० पुस्तकान्तरयोः ।
(६) पूषोषा भगवः इति क० घ० ।
(७) देव्यः इति क० घ० ।

---

(क) ऋ० १०,११०,६ । (ख) ऋ० १, ७२, २ । (ग) ऋ० ६,१०,१४ ।
(घ) ऋ० १, ९२, ५ । (ङ) ऋ० २, २८, ९ । (च) ऋ० १, १, २ ।
(छ ऋ० १, १, २ । (ज) ऋ० १, २, ५ । (झ) ऋ० १, १८, ४ ।
(ञ) ऋ० १, ११४, २ । (ट) ऋ० १, २३, १० । (ठ) ऋ० १, १५०, ३ ।
(ड) ऋ० १, ८२, १६ । (ढ) ऋ० ४, ५७, ८ । (ण) ऋ० १, २३, १४ ।
(त) ऋ० १, ११०, १ । (थ) ऋ० ५, ७५, ७ । (द) ऋ० १, १६०, ५ ।
(ध) ऋ० १, १५, २ । (न) ऋ० १, २३, १८ । (प) ऋ० १, २२, १६ ।
(फ) ऋ० ४, ५३, २ ।

(क)देवौ च (ख)मित्रावरुणौ पृथक् सह च ता(ग)वुभौ ॥८३॥
(घ)विश्वे च देवाः (ङ)सविता (च त्वष्टा वै रूपकृन्मत(१) ।
(छ अश्वो ज)ऽन्न(झ)मूलिजो(ञ वज्रो(२)(ट)ग्रावाणो रथयुत(३) ॥८४॥
(ठ)स्तुता पृथक् पृथक् (ड द्वे द्वे सूक्तैर्ऋग्भिश्च(४) (ढ)नामभि ।
स्तुतौ स्तुतौ प्रवक्ष्यामि (ण)तानि (त तेषामनुक्रमात् ॥८५॥
व्यवस्थे (थ)न्मन्त्रमार्गेष लिङ्गै(द)रग्रेषु(५) लक्षितम् ।
हविर्ष्यह्नि(६) प्रधानेषु(७) नामाङ्कानेषु केवले ॥८६॥

---

(१) रूपकृन्मुख इति घ० ।
(२) यद्य इति घ० ।
(३) रथयुग इति घ० ।
(४) सूक्तैर्ऋग्भिश्च इति घ० ।
(५) तु इति घ० ।
(६) हविर्ष्यह्नि इति ग० घ०, हविर्भिर्हि इति पाठ समीचीन ।
(७) निरुक्त्यैवमिति घ० ।

---

(क) ऋ० ६, ५६, ५। (ख) ऋ० १, १५, २। (ग) ऋ० १, १७६, ६। (घ) ऋ० १, ८६, १०। (ङ) ऋ० १, २२,८। (च) ऋ० १, ३२, २। (छ) ऋ० १, ३६, ८। (ज) ऋ० १, १४०,२। (झ) ऋ० १, ६०, ३। (ञ) ऋ० १, ११, ७। (ट) ऋ० १, ८६, ४। (ठ) ऋ० ४, ३०, ७। (ड) ऋ० १, ६८, ४। (ढ) ऋ० १, १५५, ६। (ण) ऋ० १, ५२ ६। (त) ऋ० १, २, १। (थ) ऋ० १, ३२, १३। (द) ऋ० १, ३४, २।

ऐन्द्रस्तु[क][1] मन्त्रो[2] वायव्यैर्लिङ्गै[ख]रैन्द्रैश्च लक्ष्यते[3] ।
नामधेयैश्च[4] [ग]वज्रस्य वनस्पत्या बलेन च ॥ ८७ ॥
सौर्यस्तु लिङ्गैः[घ] सूर्यस्य[5] गुणैः सर्वैस्तु[6] तैजसैः ।
[ङ]नामभिश्चैव[7] चन्द्रस्य सूक्तस्य[8] [च]भजतेऽत्र यैः[9] ॥ ८८ ॥
एतासां[10] देवतानान्तु नामधेयानुकीर्त्तनैः ।
[छ]यस्य यस्येह यावन्ति न व्यवस्यन्त्य[ज]तो[11][झ]ऽन्यथा ॥ ८९ ॥
[ञ]अयं प्रयोगस्त्वेतेषां[ट] ज्योतिषां[12][ठ] त्रिषु[ड] वर्त्तते ।

---

(१) ऐन्द्रैस्तु इति ख० घ० ।
(२) मन्त्रैः इति घ० ।
(३) लक्षितमिति घ० ।
(४) नामभिश्चैव इति क० घ० ।
(५) सौर्यश्च इति घ० ।
(६) च इति ख० घ० ।
(७) नामधेयैश्चेति ख० ग० घ० ।
(८) सूर्यस्तु इति क० घ० ।
(९) यः इति ख० पुस्तकान्तरेषु, चाखिलैरिति घ० ।
(१०) चन्द्रतायामिति घ० ।
(११) न व्यवस्यन्तः इति ग० घ० ।
(१२) ज्योतिःषु इति ख० घ० ।

---

(क) ऋ० १, १०७, ३ । (ख) ऋ० ३, ५६, ८ । (ग) ऋ० ३, ३२,७ ।
(घ) ऋ० १, १३, ६ । (ङ) ऋ० १, ११५, ६ । (च) ऋ० १, १२३,३ ।
(छ) ऋ० १, ४, ३ । (ज) ऋ० १, ६, ८ । (झ) ऋ० ३, ३२, ८ ।
(ञ) ऋ० १, १६, ७ । (ट) ऋ० १, ११६, १ । (ठ) ऋ० १, २५, ३ ।
(ड) ऋ० १, ८८, २ ।

लोकेषु मन्त्रवि(क)द्विद्वान् प्रयोगेनावबोधति ॥ ९० ॥
(ख)नीयतेऽयं नृभिर्यस्मा(ग)न्नयत्य(घ)ग्ना(ङ)वसौ च तं(१) ।
(च)तेने (छ)मौ च (ज)क्रतुः (झ)कर्म समासानौ पृथक् पृथक्(२) ॥ ९१ ।
य(ञ)द्विषते च(ट) जातस्य(३)(ठ) जातेर्यद्वाऽच(४)विद्यते ।
तेनेमौ तुल्यनामानावुभौ लोकौ समाश्रुतः(५) ॥ ९१ ॥
विश्वजन्यमेतेषां(६) (ड)भ्राजते द्योषि (ढ)मध्यमः ।
निपातमात्रे कल्प्यन्ते(७) तथा(८)प्रेयाणि कानिचित् ॥ ९२ ॥

---

(१) अन्नादिति ग० ।
(२) समासनौ इति ग० ।
(३) यतस्येति ख०, जात जन् इति ग० ।
(४) चयेति ग० ।
(५) समश्रुता इति ग० ।
(६) वजन्निदयमेकन्तु इति ग०, विश्वजय नयमेतेषामिति ख० ।
(७) कल्पन्ते इति घ०, कथ्यन्ते इति ग० ।
(८) तस्य इति ग० ।

---

(क) ऋ० १, २४, १३ । (ख) ऋ० ६, २७, ३ । (ग) ऋ० ४, २१, ४ । (घ) १, १७१, ४ । (ङ) ऋ० १, १०५, १६ । (च) ऋ० १, ३१, ६ । (छ) ऋ० २, ४०, २ । (ज) ऋ० १, १७, ५ । (झ) ऋ० १, ३१, ८ । (ञ) ऋ० १, ४४, ६ । (ट) ऋ० १, ८६, ७ । (ठ) ऋ० ५, १५, २ । (ड) ऋ० १०, ८०, २ । (ढ) १, १६४, २ ।

(क)अर्चिभिः(ख) केश्यग्नं(१) लग्निर्विद्युद्भिरेव(२) मध्यमः ।
असौ तु(ग) रश्मिभिः(३) केशी तेनैनामाह(४) केशिनः(घ) ॥ ८३ ॥
एतेषां तु पृथक्त्वेन त्रयाणां केशिनामिह ।
संलक्ष्यन्ते प्रक्रियासु त्रयः केशिन इत्यृचि(५) ॥ ८४ ॥
न चैवैषां(६) प्रसूतिर्वा विभूतिः स्थानजन्म वा(७) ।
निर्वक्तुं शक्यमेतैर्हि कृत्स्नं व्याप्तमिदं जगत् ॥ ८५ ॥
(ङ)वैश्वानरे(८) श्रितो ह्यग्निरग्नौ(९) वैश्वानरः श्रितः ।
अनयो(च)र्जातवेदास्तु तथैव(छ) जातवेदसि(१०) ॥ ८६ ॥

---

(१) अर्चिभिः केश्ययं इति ख०, अर्चिभिः केशयमिति ङ० ।
(२) रुवेव इति ग० घ० ।
(३) कुरश्मिभिरिति ख० ।
(४) तेन नामाह इति घ० ।
(५) प्रक्तिसानि कलवच्च वर्धीति च इति घ० ।
(६) नचैवैषां इति घ० ।
(७) विभूतिस्थानजन्म वा इति ख० ग० ।
(८) वैश्वानरे इति क० घ० ।
(९) अग्नौ इति क० घ० ।
(१०) तु तथैनौ जातवेदसी इति क० ख० ग० ङ० ।

---

(क) ऋ० ५, ७९, ८ । (ख) ऋ० १०, १०२, ६ । (ग) ऋ० १, १९, ८ । (घ) ऋ० १, १६४, ४४ । (ङ) ऋ० ७, ५, २, । (च) ऋ० १, ७७, ५ । (छ) ऋ० ६, १६, ४२ ।

धात्वोक्यार्थैकजातत्वाद्[१] व्याप्तिमत्त्वात्तु तैजस[२] ।
तस्य तस्येह[३] देवत्व दृश्यन्ते ते [४]पृथक्[५] स्तुता ॥९७॥
यस्त्वाग्नेयमिति ब्रूम[६] सूक्तभाक् तत्र[७] पार्थिव ।
जातवेदस्यमित्युक्ते सूक्तेऽस्मिन् मध्यम स्मृत[८] ॥ ९८ ॥
वैश्वानरीयमिति तु यत्र ब्रूमो[९]ऽथ वा क्वचित् ।
सूर्यसूक्तस्य[१०] भाक्तत्र ज्ञेयो वैश्वानरस्तुतौ[११] ॥ ९९ ॥
सूर्यप्रसूतावग्नी तु दृष्टौ[१२] पार्थिवमध्यमौ ।
एतेषामेव लोकानां त्रयाणामध्वरेऽध्वरे ॥ १०० ॥
[क]रोहात्प्रत्यवरोहेण चिकीर्षन्नाग्निमारुतम्[१३] ।

---

(१) एकजन्यात्वेति क० घ० ।
(२) व्याप्तिमत्त्वाच्च तेजस इति क० घ० ।
(३) यस्य यस्येह इति क० घ०, तस्य तस्य च इति ख० ग० ।
(४) च इति ख० ग० ।
(५) स्तुतिषु इति घ० ।
(६) यत्राग्नेयमिति ब्रूम इति ग०, यस्त्वाग्नेयमिति घ० ।
(७) सूक्त भक्त्या तु इति क० घ० ।
(८) सूक्त भक्त्या तु मध्यम इति घ० ।
(९) इत्युक्ते यद्ब्रूयामो इति क० घ० ।
(१०) सूर्य्यं सूक्तस्येति ग० ।
(११) सूर्य्यमक्तस्य सूर्य्यस्य ज्ञेयो वैश्वानरो दिवि इति क० घ० ।
(१२) दृश्यौ इति ख०, दृश्यौ इति क० घ० ।
(१३) चिकीर्षन्नग्निमारुतमिति ग० ।

---

(क) ऋ० १, ५६, २ ।

प्रस्तं[१] वैश्वानरीयेण सूक्तेन प्रतिपद्यते ॥ १०१ ॥
ततस्तु मध्यमस्थाना देवतास्त्वनुशंसति[२]।
इन्द्रश्च[३] मरुतश्चैव स्तोचियेऽग्नि[४]मिमं पुनः ॥ १०२ ॥
तथैत[५]दुक्तमेतेषां विभूतिस्थानमम्भवम्।
यथा[६] च देवदेवस्य तत्र तत्रेह दृश्यते ॥ १०३ ॥
यद्यच्च पृथिवीस्थानं पार्थिवं चाग्निमिश्रितम्[७]।
तत्सर्वमानुपूर्व्येण[८] कथ्यमानं निबोधत ॥ १०४ ॥
जातवेदाः[क] श्रितो ह्य[९]ग्नि[ख]मग्निं वैश्वानरः[ग] श्रितः[घ]।

---

(१) प्रास्तमिति ग०।
(२) मध्यमे स्थानाद्देवतास्त्वनुशंससि इति ख०, देवतास्त्वनु शंसति इति घ०।
(३) वदश्चेति ग०।
(४) स्तोत्रियामिमिति घ०।
(५) यथैतदिति ख० ग० घ०।
(६) तथा इति ख० ग० ङ०।
(७) वाग्निमिश्रितमिति क० घ०, वाग्निमिश्रितमिति ङ०।
(८) ख्यानुपूर्व्येति ग० घ० ङ०।
(९) ह्यपि इति घ०।

---

(क) ऋ० ३, ७७, ५। (ख) ऋ० १, १, १। (ग) ऋ० १, ५९, ६।
(घ) ऋ० १, ७५, २।

द्रविणोदा[क]स्तथेध्म[ख]श्च श्रितश्चाग्निं[१] तनूनपात्[ग] ॥ १०५ ॥
नराशंसः[घ] श्रितश्चैन[ङ]मेन[२]मेवाश्रित[३]स्त्विळः[च] ।
बर्हिर्द्वार[छ]श्च देव्यो[ज]ऽग्नि[४]मेन[५]मेव तु संश्रिताः ॥ १०६ ॥
नक्तोषा[झ] सा च देव्यौ[६] च होतारा[ञ]वेतदाश्रयौ[७] ।
देव्य[८]स्तिस्रः श्रितास्चैनं त्वष्टा[ट] चैवैतदाश्रयः ॥ १०७ ॥
श्रितो वनस्पति[ठ]श्चैन[९] स्वाहाकृतय[ड] एव च ।
प्रयाश्च[ढ] मकुनियेव मण्डूका[ण]श्चैतदाश्रयाः[१०] ॥ १०८ ॥

---

(१) अग्निरिति घ० ।
(२) एतमेनमिति ग०, एवमेतमिति घ० ।
(३) वाश्रिता इति ख० घ० पुस्तकान्तरञ्च ।
(४) देवोऽग्निमिति ख० ।
(५) एतमिति घ० ।
(६) दैव्यौ इति ङ० ।
(७) एतदाश्रितौ इति घ०, होतारौ च तदाश्रयौ इति पुस्तकान्तरं ।
(८) देव्या इति ग० ।
(९) एवमिति ख० ।
(१०) तदाश्रया इति ख० ।

---

(क) ऋ० १, १५, ७-९ । (ख) ऋ० ८, ४५, २ । (ग) ऋ० १, १८८, २ ।
(घ) ऋ० १, १४२, ३ । (ङ) ऋ० १, ९, २ । (च) ऋ० १, १२८, १ ।
(छ) ऋ० १, १३, ६ । (ज) ऋ० १, १४०, ७ । (झ) ऋ० १, ११, ७ ।
(ञ) ऋ० १०, ६५, १० । (ट) ऋ० १, ३२, २ । (ठ) ऋ० १, ९०, ८ ।
(ड) ऋ० ९, ४, ११ । (ढ) ऋ० १, ३६, ८ । (ण) ऋ० ७, १०३, ७ ।

[क]ग्रावाण[१]श्चैन[२]मचा[३][ख]श्च मराग्रंसस्तथा रथः[ग] ।
[घ]दुन्दुभिश्चेषुधि[ङ]श्चैव[४] हस्तघ्नो[च][५] भीगवो[६] धनुः[छ] ॥१०९॥
[ज]ज्या चैतदाश्रितेपुश्च[७] श्रिता अश्वाजनी[झ][८] च या ।
[ञ]वृषभो द्रुघण[९]श्चैव[ट][१०] मेतं पितुरुलूखलम्[११][ठ] ॥११०॥
मधश्चैवैनमापश्च सर्वाश्चौषधयस्तथा[१२] ।
राज्यसाम्राज्य[ड]रण्यानिः[ढ][१३] श्रद्धे[ण]ला[त]पृथिवी[थ]तथा[१४] ॥१११॥

---

(१) आवया इति ख०, ग्रावण इति ग० ।
(२) एवमिति ख०, एतमिति घ० ।
(३) मद्या इति ग० ।
(४) एनमिति ग०, एतमिति ङ०, पुस्तकान्तरञ्च ।
(५) हस्तघ्नी इति पुस्तकान्तरं ।
(६) अभीषव इति पाठः सुसङ्गततया भाति ।
(७) आश्रयेषुरिति घ० ।
(८) आम्बाजनी इति ख०, चाम्बाजनी इति ध० ।
(९) वृषभो द्रुघण इति ग०, वृषाद्द्रुघण इति घ० ।
(१०) एनमिति ग० ङ० पुस्तकान्तरञ्च, एवमिति घ० ।
(११) वृषभेद्रुघणश्चैलमेवैतं पितुमुलूखलमिति ख० ।
(१२) सह्येति ख०, सर्व्वा ओषधयश्च हेति ग० ङ० पुस्तकान्तरञ्च ।
(१३) राज्ञिरथाक्षोप्यरण्यानी इति ख०, राज्यसाम्राज्यरण्यानी इति ग० ङ०, आदर्शपुस्तकमात्रे अरण्यानीति दीर्घस्वरान्तपाठोऽस्ति ।
(१४) अद्धा द्यावा पृथिव्यथेति क० घ० ।

---

(क) ऋ० १, ८९, ४ । (ख) ऋ० ६, ४२, ५ । (ग) ऋ० १, ३०, १८ ।
(घ) ऋ० १, २८, ५ । (ङ) ऋ० ६, ७५, ५ । (च) ऋ० ६, ७५, १४ ।
(छ) ऋ० ६, ७५, २ । (ज) ऋ० ६, ७५, ३ । (झ) ऋ० ५, ६२, ७ ।
(ञ) ऋ० १, ३१, ५ । (ट) ऋ० १०, ६५, १८ । (ठ) ऋ० १, २८, ६ ।
(ड) ऋ० ५, ४६, ८ । (ढ) ऋ० १०, १४६, २ । (ण) ७, ३२, १४ ।
(त) ऋ० १, १३, ९ । (थ) ऋ० १, २२, १३ ।

भजते चैन(१) मेषोर्म्यौ(क)(२) द्वन्द्वभूते च रोदसी(ख)(३) ।
मुषलोलूखले(ग) चैनं(४) हविर्धाने च ये स्मृते ॥११२॥
जोष्ट्री(५)चोर्जाहुती(घ) चैन(६) सुदुघ्या(७)(ङ) च विपाट्(च) सह ।
यौ च देवौ शुनासीरौ(छ)(८) तौ चाग्नी चैतदाश्रयौ(९) ॥११३॥
लोके वै(१०) यच्च वै प्रातः सवन(ज) क्रियते मखे(झ) ।
वसन्त(ञ)शरदौ(ट) चर्द्ध स्तोमौ(ठ)ऽनुष्टुवयौ(ड) चित्रत्(ढ)(११) ॥११४॥

---

(१) चैवमिति ख०, भजेते चैतमिति क० घ०, भजेते चैनमिति ङ० ।
(२) सेनार्म्यौ (?) इति क० ग० घ० ।
(३) तु रोदसी इति ख० ।
(४) एवेति क० घ० ।
(५) जोष्ट्री इति ख० ।
(६) चोर्जाहुतिश्चैनमिति ख०, एवेति क० घ० ।
(७) सुदुघा इति ख० ।
(८) शुनासीरौ इति ख० ।
(९) चैवाग्नेतदाश्रयौ इति क० घ०, चाग्नि चैतदाश्रयेति ख० ।
(१०) लोकोऽयमिति क०ग० घ० ङ० ।
(११) च यश्चित्रत् इति क० घ० ।

---

(क) ऋ० १, १४, ८ । (ख) ऋ० १, १६७, ५ । (ग) ऋ० १, २८, ६ ।
(घ) ऋ० ८, ३९, ४ । (ङ) ऋ० ३, ३३, १ । (च) ऋ० ३, ३३, १ ।
(छ) ऋ० ४, ५७, ५ । (ज) ऋ० १, १९, ५ । (झ) ऋ० १, ६, ८ ।
(ञ) ऋ० १०, ९०, ६ । (ट) ऋ० १, ७२, ३ । (ठ) ऋ० १, ८, १० ।
(ड) ऋ० १, २८, ९ । (ढ) ऋ० १, १४०, २ । (ण) ऋ० ६, ७५, ४ ।

गायत्री[क] चैकविंशश्च यच्च साम[ख]रथन्तरम्[१][ग]।
साध्याः[घ] साम च वैराजमाग्न्य[ङ]श्च वसुभिः[च][२] सह ॥११५॥
इन्द्रेण च मरुद्भिश्च सोमेन वरुणेन च।
पर्ज्जन्येनर्त्तुभिश्चैव विष्णुना चास्य संस्तवः ॥११६॥
अस्यैवाग्नेस्तु पूष्णा च[३] सामाख्यं वरुणेन च।
देवता वाहनश्चैव[४] हविषां[५] वहनं तथा ॥११७॥
देवतामर्थतत्त्वज्ञो मन्त्रैः संस्तूयते[६]हविः[७]।
असन्नतस्या[८]पि सतो[९] हविरेकं[१०] निरूप्यते ॥११८॥
कर्म दृष्टे च[११] यत् किञ्चिद्[१२] विषये[१३] परिवर्त्तते।

(१) साध्यं रथन्तरमिति ख०।
(२) आग्न्यश्चवसुभिरिति ख०, आग्नाश्च वसुभिरिति ग० घ० ङ०।
(३) पुष्पश्चेति ख०, पुष्पा चेति ङ० पुस्तकान्तरञ्च॥
(४) अपि इति क० घ०।
(५) हविष इति क० घ०।
(६) संयोजयेदिति क० घ०।
(७) विदुरिति ख०।
(८) असंस्कृतस्येति क० घ०।
(९) विततः इति घ०।
(१०) यथा इति ख०, एवमिति ग०।
(११) तु इति क० घ०, कर्म्म दृष्टेश्चिति ङ० पुस्तकान्तरञ्च।
(१२) य कश्चिदिति क० घ०।
(१३) विकये इति ख०, विशये इति ङ०।

(क) ऋ० १०, १४, १६। (ख) ऋ० १,६२,२। (ग) ऋ० १०,१८२,१।
(घ) ऋ० १, १६४,५०। (ङ) ऋ० १, १०५, ८। (च) ऋ० १, ५८, ३।

त्वष्टा[क] च सविता चैव वातो[ख][1]वाचस्पतिस्तथा ।
धाता प्रजापतिश्चैव अथर्वाण[ग]श्च[2] ये स्मृताः ॥१२४॥
भृगव[घ]श्चैवमग्निश्च[3] तथेला[ङ] चैव याः स्मृताः ।
विधातेन्दुरहिर्बुध्न्यः [च]सोमोऽहिरथ चन्द्रमाः ॥१२५॥
विश्वानर[छ]श्च वै[4]देव ऋभूणां[ज] संस्तुतो[5] गणः ॥१२६॥
मरुतोऽङ्गिरसश्चैव पितरस्त्वृतुभिः सह ।
राका[झ][6]वाक्[ञ]सरमा[ट]श्वा[ठ]श्च[7]भृगवो[ड]ऽघ्न्या सरस्वती॥१२७॥
यम्यु[ढ]र्वम्री[8]सिनीवाली[ण] पथ्या[त] स्वस्ति[थ]रुषाः कुहूः ।

---

(१) वाचः इति क० घ० ।
(२) चाथर्वाणश्चेति ख० ।
(३) श्चेमश्चैवैवमापश्चेति ख० घ० ।
(४) चैवेति ख० पुस्तकान्तरञ्च ।
(५) दशानां चाश्रितः इति क० घ० ।
(६) एका इति क० ।
(७) वाक्सरमाश्चेति ङ० ।
(८) यभ्रुरिति ख० ।

---

(क) ऋ० १, ३२, २ । (ख) ऋ० १, २८, ६ । (ग) ऋ० ६, ११, २ ।
(घ) ऋ० १, ५८, ६ । (ङ) ऋ० १, १३, ९ । (च) ऋ० १, १८६, ५ ।
(छ) ऋ० १, १८६, १ । (ज) ऋ० ४, ३५, २ । (झ) ऋ० २, ३२, ८ ।
(ञ) ऋ० १, १६४, ४५ । (ट) ऋ० १, ६२, ३ । (ठ) ऋ० १, १०५, ९ ।
(ड) ऋ० १, ५८, ६ । (ढ) ऋ० १, १०१, ४ । (ण) ऋ० २, ३२, ८ ।
(त) ऋ० १, ५४, ५ । (थ) ऋ० ३, ८९, ६ ।

पृथिव्यनुमतिर्धेनुः सीता[क]ला[ख]क्षा तथैव[१] गौः ।
गौरी[ग] च रोदसी[घ] चैव इन्द्राण्या[२]स्त्रेध वै पतिः ॥१२८॥
छन्दस्त्रिष्टुप् च पङ्क्ति[ङ]श्च लोकानां मध्यमश्च यः ।
एतेष्वेवाश्रयो[३]विद्यात्सवनं[च] मध्यमञ्च यत् ॥१२९॥
ऋतू च ग्रीष्महेमन्तौ यच्च साम्नोच्यते[४] बृहत् ।
शक्वरीषु[छ] च यद्गीतं साम्ना नाम्नाथ शाक्वरम् ॥१३०॥

इति बृहद्देवतायां प्रथमोऽध्यायः ।

---

(१) सीतालोका दितिश्चेति क० घ०, सीतालाक्षा तथैवेति ख० ग० ।
(२) चैवेन्द्राण्यग्ना इति ख० ।
(३) एतस्मिन्नाश्रय इति क० घ०, आश्रये इति ख० पुस्तकान्तरे च ।
(४) साम्नोच्यते इति ख० ।

---

(क) ऋ० ४, ५७, ७ । (ख) ऋ० १, १२८, ७ । (ग) ऋ० ८, १२, २ ।
(घ) ऋ० १, १६०, ५ । (ङ) ऋ० १०, ११०, ८ । (च) ऋ० १, १६, ५ ।
(छ) ऋ० ७, ६६, ४ ।

# अथ द्वितीयोऽध्यायः ।



आह चास्यैव तौ[1]सोमा[क]वाग्नयौ शाकटायनः[2] ।
यस्य[3] पञ्चदशो नाम्ना सङ्ख्यया[4] त्रिणवस्य[5] यः ॥१॥
संस्तुत[6]श्चैव पूष्णा च विष्णुना वरुणेन च ।
सोमवाय्वग्निकुत्सैश्च ब्रह्मणस्पतिनैव च ॥२॥
बृहस्पतिना च तथा[7] बृहत[ख]श्चैव वै पतिः[8] ।
काश्चित्[9] केचिदित्याहुर्निपाताः[ग] स्तुतिषु स्तुताः[10] ॥३॥

---

(१) द्वौ इति ख० ग० ङ० ।
(२) साकटायनः इति क० घ० ।
(३) यस्येति ख० ।
(४) सङ्ख्यायामिति क० घ० ।
(५) त्रिनवः इति दन्त्यनकारयुक्तपाठो विशुद्धः ।
(६) संस्तुतः इति क० घ० ।
(७) स बृहस्पतिना चैव इति ख०, बृहतस्पतिना चैवेति ग० ङ० ।
(८) नाम्ना यश्चापि पर्वतः(घ) इति ख० ग० ङ० पुस्तकान्तरेषु ।
(९) कश्चित्तु इति क० घ० ।
(१०) निपातः स्तुतिषु स्तुतः इति क० घ० ।

---

(क) ऋ० १, ८, १० । (ख) ऋ० १, १३०, ८ । (ग) ऋ० ४,५५,२ ।
(घ) ऋ० १, ६०, ७ ।

मित्र[क]स्तु[१] स्तूयते[२] देवो वरुणेन मह्ना[३][ख] सकृत् ।
रुद्रेण सोमः पूष्णा[४] च पुनः पूषा च वायुना ॥४॥
वातेनैव तु[५] पर्जन्यो स्तूयते वै क्वचित्[६] क्वचित् ।
अर्द्ध[ग]र्चेषु[७] पादेषु सूक्तेष्वेव तु[८] तत्त्रयम् ॥५॥
रथादानं[९] तु कर्मास्य हविष[१०][घ] च निवर्हणम् ।
स्तुते प्रभुत्व सर्वस्य बलस्य[ङ] निखिला कृतिः ॥६॥
इत्यैन्द्रो मध्यमस्थानो गणः सम्यगुदाहृतः ।
यः परस्तु[११] गणः सौर्य्यः पुरस्तात्तं निबोधत ॥७॥

---

(१) तु इति ख० ङ० पुस्तकान्तरयोः ।
(२) स्तूयते इति ग० ङ० पुस्तकान्तरयोः ।
(३) सर्व्वेषु आदर्शपुस्तकेषु, सहा इति विविधपाठो वर्त्तते ।
(४) पूषा इति ख० ।
(५) चैव इति ख० ङ० । चेति ग० ।
(६) अन्यत्र वै इति ग० ङ० पुस्तकान्तरयोः ।
(७) अर्द्धर्चेष्वपि इति क० ख०, अर्द्धर्चेषु च इति ख० अर्द्धर्चर्चेषु इति ग० ।
(८) सूक्तेष्वेव त्विति ख० ग०, सूक्तेष्वेतेषु इति पुस्तकान्तरे ।
(९) रथदानमिति क० ग० ।
(१०) हविष्येति क० ख० ।
(११) दय दश इति क० ।

---

(क) ऋ० १, १३६ ६ । (ख) ऋ० ८, २०, २० । (ग) ऋ० ४,४८ १ ।
(घ) ऋ० १, ६२ १० । (ङ) ऋ० १ १०,१७ ।

तस्य मुख्यतमौ देवावश्विनौ[1]सूर्य्यमाश्रितौ ।
वृषाकपायि[2][क] सूर्य्या[ख]षाः[ग] सूर्य्यस्यैव तु पत्नयः[3] ॥८॥
अमुतोर्वाङ्[4]निवर्त्तन्ते प्रतिलोमास्तदाश्रयाः[5] ।
पुरोदया[6]त्तासुषसं सूर्य्यां मध्यन्दिने स्थिते ॥९॥
वृषाकपायिं[2] सूर्य्यास्तकाम्न आहुः[7] स्तुतिष्वृचि[8] ।
तस्या[9]श्रये[10]सरण्यूश्च[घ][11] भगः[ङ] पूषा वृषाकपिः[च][12] ॥१०॥

---

(१) त्वश्विनौ इति क॰ घ॰ ।
(२) सर्व्वेषु आदर्शपुस्तकेषु वृषाकपायी इति दीर्घस्वरान्तपाठो वर्त्तते ।
(३) पत्नय इति क॰, यत्नतः इति ख॰ ।
(४) अमुतोर्वागिति ङ॰ पुस्तकान्तरञ्च । अमुतो वागितिपाठः शुद्धः ।
(५) पलोदये इति क॰ घ॰ ।
(६) पुरोदये इति क॰ घ॰ ।
(७) सूर्य्यस्य तामेवाहुरिति क॰ घ॰, सूर्य्यस्य स्तानेत्राहुरिति ख॰ ।
(८) तु निम्नुचि इति क॰, निमुचि इति ख॰ ।
(९) अस्येति क॰ घ॰ ।
(१०) आश्रमे इति ग॰ ।
(११) तस्याप्स्वेति ख॰ ।
(१२) बृहस्पतिरिति ख॰ ।

---

(क) ऋ॰ १०, ८६, १३ । (ख) ऋ॰ ५, ७३, ५ । (ग) ऋ॰ १, ४६, १ ।
(घ) ऋ॰ १०, १७, २ । (ङ) ऋ॰ १, २४, ४ । (च) ऋ॰ १०, ८६, १ ।

यमो वैश्वानरो[क] विष्णुर्वरुणश्चैकपाट्ज[१] ।
पृथिवी च समुद्राश्च देवा सप्तर्षयश्च ये ॥११॥
आदित्या केशिसाध्याश्च सविता[२] वसुभिर्मनुः ।
दध्यङ्[ख]पर्वा[ग] विश्वे[घ] च वाजिनो[ङ][३]देवपत्न्यय ॥१२॥
असौ तृतीय सवनं[४] लोक साम च[५] रैवत ।
वैरूपश्चैव वर्षाश्च[६] शिशिरोऽथ ऋतुस्तथा[७] ॥१३॥
त्रयस्त्रिंशश्च[८]य स्तोम[च][९] कृपा मन्त्रश्च य ।
छन्दश्च जगतीनाम्ना[१०] तथाऽतिच्छन्दसश्च[११]या[१२] ॥१४॥

---

(१) यम मादृश इति क० घ० ।
(२) आदित्यपूज साध्याश्च सार्द्धश्चेति क० घ० ।
(३) वाजिनौ इति ख० ।
(४) तृतीयसवनमिति क० घ० ।
(५) तृतीय सवैन लोमशाला चेति ख० ।
(६) वैरूप्यश्चैव मर्षाश्चेति ख० ।
(७) शिशिरश्चैव यावत् इति क० घ० ।
(८) त्रयस्त्रिंशश्चेति ख० ।
(९) यत् स्तोम इति क० घ० ।
(१०) चैवेति क० घ० ।
(११) अतिच्छन्दसाश्चेति ग०, अतिच्छन्दसाश्चेति क० ख० घ० ।
(१२) यदिति क० घ० ।

---

(क) ऋ० १, ४८, ६ । (ख) ऋ० १, ८०, १६ । (ग) ऋ० १, ८०, १६ ।
(घ) ऋ० १, ३, ७-९ । (ङ) ऋ० १, ११, २ । (च) ऋ० १, ८, १० ।

पौरुषश्चाङ्गरस्यैतत्सर्वमेव तु[1] पौरुषं।
एतस्यैव तु विज्ञेया देवाः संस्तविका[2]स्त्रयः[3] ॥१५॥
चन्द्रमाश्चैव वायुश्च पञ्चमं वत्सरं[4] विदुः।
केचित्तु निर्वपत्य[5]स्य सौर्य्यं वैश्वानरं हविः ॥१६॥
सौर्य्यवैश्वानरीयं हि तत् सूक्तमिव[6] दृश्यते।
ऋगर्द्धर्चोऽथ[7]वा पादो दृचो वा यदि वा तृचः ॥१७॥
अनेन तु प्रवादेन[8] दृष्टा सूर्द्धन्वतास्तुतिः।
सूर्य्यवैश्वानराग्नीना[9] मैकात्म्यमिह दृश्यते ॥१८॥
हरणं तु रसस्यैतत्कर्मणाऽमुष[10]रश्मिभिः।
यानीमानि च पश्यन्ति सर्वभूतानि तेजसा[11] ॥१९॥

---

(१) हेति ख०।
(२) संस्तापिकाः इति क० घ०।
(३) तये इति ख०।
(४) पञ्च संवत्सरमिति क० घ०, पञ्चसंवत्सरमिति ख०।
(५) निर्व्वपते चेति क० घ०।
(६) न सूक्तमिहेति क० घ०।
(७) ऋगर्द्धर्चस्येति क० घ०, ऋगवर्द्धर्चाथेति ख०।
(८) प्रयोगेणेति क० घ०, प्रपादेनेति ख०।
(९) सौर्य्यवैश्वानराग्नीनामिति क० ख० घ० पुस्तकान्तरञ्च।
(१०) रश्मिमिथास्य कर्म्माऽमुष चेति ग० ङ० पुस्तकान्तरञ्च।
(११) येन नातिविभान्ति सर्य्यभूतानि चक्षुषेति ख० ग० ङ० पुस्तकान्तरञ्च।

विभागमिममेतेषां विभूतिस्थानसम्भवम्।
सम्यग्विज्ञाय[1] मन्त्रेषु तत्तत्[2] कर्मसु योजयेत् ॥२०॥
अध्यापयन्नधीयानो मन्त्रां[3]श्चैवानुकीर्तयन्।
स्थानं सालोक्यं सायुज्यमेतेषामधिगच्छति[4] ॥२१॥
अग्नेस्तु यानि सूक्तानि[5] पञ्च नामानि कारव[क]।
षड्विभक्तिस्तथेन्द्रस्य प्राहुः सूर्यस्य सप्त च ॥२२॥
तेषां पृथङ्निर्वचनमेकैकस्येह कर्मजम्।
उच्यमानं यथाम्नायं शृणुध्वमखिलं मया ॥२३॥
जातो यदग्रे भूतानामग्रणीरध्वरे च यत्।
नाम्ना सन्नयते वाङ्गं[6] स्तुतोऽग्निरिति[7] सूरिभिः[ख] ॥२४॥
द्रविणं[ग] धनं बलं वापि प्रायच्छत्तेन[8] कर्मणा।

---

(१) विज्ञायमिति क० ख०।
(२) तत्तदिति क० ख०।
(३) मन्त्र इति क० ख०।
(४) एष गच्छतीति ख० ग० घ० पुस्तकान्तरेषु।
(५) सूक्तेषु इति क० ख०।
(६) नाम्नास्तुते चाग्ने इति क० ख०।
(७) इत्येति क० ख०।
(८) चैव प्रदध्येतेनेति क० ख०।

(क) ऋ० १,११,६। (ख) ऋ० १,१२,१४। (ग) ऋ० १,८०,१६।

तत्कर्म दृष्ट्वा(१)कुत्स(क)स्तु प्राहैनं द्रविणोदसं(ख) ॥२५॥
अयं तनूनपाद(ग)ग्निरसौ हि तननात्तनुः(२)(घ) ।
ततस्तु मध्यमो जज्ञे स्थानेऽयं(३) मध्यमात्ततः(४) ॥२६॥
अनन्तरं(५) प्रजामाहुर्नपा(ङ)दिति शपण्यवः ।
नपात्सुध्य(६)चैवायमग्निस्तेन तनूनपात् ॥२७॥
पृथक्त्वेन समस्तेन(७) यज्ञो यच्छास्यते(८) नृभिः ।
स्तुवन्त्यग्नीषु तेनेमं नराशंस(च)न्तु कारवः(९)(छ) ॥२८॥
पुनाति(१०) यदिदं विश्वमेवाग्निः(११) पार्थिवोऽथ च(१२) ।

---

(१) ज्ञात्वेति क० घ० ।
(२) तपसा तनूरिति क० घ० ।
(३) स्थानेऽयमिति ख० ।
(४) जज्ञे यस्त्वेव मध्यमादिति क० घ० ।
(५) अनन्तरामिति ख० पुस्तकान्तरञ्च ।
(६) स्वमुध्येति ख० ।
(७) समासैस्त्विति ख० ग० ङ० पुस्तकान्तरञ्च ।
(८) वास्यते इति क० ख० ।
(९) सूरयः इति क० घ० ।
(१०) जानाति इति ख० ।
(११) विश्वमेवाग्निरिति ख० ।
(१२) पार्थिवोऽप्यथेति ख० ।

---

(क) ऋ० १, १०६, ६ । (ख) ऋ० ९, ८८, ३ । (ग) १, १८८, २ ।
(घ) ऋ० १, १२०, ११ । (ङ) ऋ० १, १४३, १ । (च) ऋ० १, १३, ३ ।
(छ) ऋ० १, ११, ६ ।

वैखानसर्षिभि[१] स्तेन पवमान[क] इति स्तुत[२] ॥१९॥
भूतानि वेदयज्जातो जातवेदाऽथ[ख]कथ्यते[३] ।
यद्वैव[४]जातविद्यो[५]ऽभूद्वित्ता[६]जातोऽधिवेत्ति[७] वा ॥२०॥
विद्यते सर्वभूतैर्हि[८] यद्वा जातः[९] पुनः पुनः ।
तेनैव मध्यभागिन्द्रो[ग][१०] जातवेदा इति स्तुत ॥२१॥
पुनाति यदिदं विश्वं श्रेयोऽग्निः[घ] पार्थिवोऽप्सु सन् ।
वैखानसर्षिभिस्तस्मात्पवमान इति स्तुत.[११] ॥२२॥

---

(१) वैखानस ऋषिरिति ख० ।
(२) पुनातीत्यादि पवमान इति स्तुत इत्यन्तपाठ क० घ० पुस्तकयो र्नास्ति ।
(३) जातवेदाश्च विद्यते इति क० घ० ।
(४) यद्वैव इति क० घ० ।
(५) जातं वेद इति क० घ० पुस्तकान्तरयो ।
(६) वित्तमिति ख० ग० ङ० ।
(७) यच्च वेत्तीति क० घ० ।
(८) सर्वमेतद्धीति क० घ० ।
(९) जातामिति क० घ० ।
(१०) मध्यमाग्नेन्द्र इति ख० ग० ।
(११) अयं श्लोक ख० ग० ङ० पुस्तकेषु पुस्तकान्तरे च न विद्यते ।

---

(क) ऋ० ८, १०१, १४ । (ख) ऋ० १, ७७, ५ । (ग) ऋ० १, २, ५ ।
(घ) ऋ० १, १, २ ।

अग्निष्ठ एष[1] यत्तु त्रीन्[2]व्याप्येको व्योम्नि तिष्ठति ।
तेनैनमृषयोऽर्चन्त[3] कर्मणा वायु[क]मब्रुवन् ॥ ३ ३॥
त्रीणीमान्यादृणोत्येको[4]मूर्त्तेन तु रसेन यत् ।
तथैनं वरुणं[ख] प्राह्वा स्तुतिष्वाङ्गः कृपण्यवः[5] ॥ ३ ४॥
अरोदीद[6]न्तरिक्षे यद्विद्युदृष्टिं ददन्नृणां[7] ।
चतुर्भिर्ऋषिभिस्तेन रुद्र[ग] इत्यभिसंस्तुतः[8] ॥ ३ ५॥
चतुर्विधानां भूतानां प्राणो भूत्वा व्यवस्थितः ।
इष्टे चैवास्य सर्वस्य तेनेन्द्र इति च स्तुतः[9] ॥ ३ ६॥
इरां[घ] दृणाति[10] यत्काले मरुद्भिः सहितोऽम्बरे ।

---

(१) अग्निस्थैवेति क॰ घ॰ ।
(२) यत्तान्वा इति क॰, यत्तु त्रीनिति ख॰ ङ॰, यत्तश्चा इति घ॰ ।
(३) अर्चन्ते इति ख॰ ग॰ ङ॰ पुस्तकान्तरच ।
(४) त्रीणिमानादृणोत्येकानिति क॰ घ॰ ।
(५) तु कारव इति क॰ घ॰ ।
(६) रोदयन्निति क॰ घ॰ ।
(७) विद्युदृष्टिरदान्नृणामिति क॰ घ॰ ।
(८) अभिधीयते इति क॰ घ॰ ।
(९) एष श्लोक क॰ घ॰ पुस्तकयोर्नास्ति ।
(१०) इरा ददातीति क॰ घ॰ ।

---

(क) ऋ॰ ५, ४१, ६ । (ख) ऋ॰ १, २, ७ । (ग) ऋ॰ १, ४३, ३ । (घ) ऋ॰ ५, ८३, ४ ।

रवेण महता युक्तस्तेनेन्द्रमृषयोऽब्रुवन् ॥२७॥
यदिमां प्रार्जयन्त्ये[१]को रसेनाम्बरजेन गां ।
कालेऽचिरैर्वैषयुर्षि[२]तेन पर्जन्य[३]माहतुः ॥२८॥
तर्पयन्नेव लोकान् जन्यो जनयिताश्च यत् ।
परो[४]ऽजेता जनयिता यदाग्नेयस्ततो[५]जगौ[क] ॥२९॥
वृहन्तौ पाति लोकावेष द्वौ मध्यमोत्तमौ ।
वृहता[६]कर्म्मणा तेन[७] वृहस्पति[ख] रितीडितः[८] ॥४०॥
ब्रह्म वाक् ब्रह्म सत्यञ्च ब्रह्म सर्व्वमिदं जगत् ।
पातारं ब्रह्मणस्तेन भौमहोत्रः स्तुवन् जगौ ॥४१॥
क्षपा[ग][९] चितिभ्यो विदधद्दुतुम्बविशत् चितौ[१०] ।

---

(१) प्राजयतीति क० घ० ।
(२) वार्षी इति क० घ० ।
(३) पुर० इति ख० ।
(४) चाग्नेयजात इति ख० ग० ।
(५) एव श्लोकः क० घ० पुस्तकयोर्न दृश्यते ।
(६) वृहन्तीति ख० ।
(७) येनेति क० घ० ।
(८) वृहस्पत्येव वै पतिरिति क० घ० ।
(९) क्षपामिति ग० ।
(१०) ब्रह्मवागित्यादि चविशत् चितौ इत्यन्तपाठः क० घ० पुस्तकयोर्न्दृश्यते ।

---

(क) ऋ० ५, ५३, ६ । (ख) ऋ० १, १०, २ । (ग) ऋ० ६, ६८, ४ ।

ददाति यदि मह्येचे लृतावम्बरजं पुनः[१] ।
तेनैनमाह चेत्रस्य वामदेवः[क][२]स्तुवन् पतिं ॥४२॥
मनसेमन्तु यं दृश्यं[३] मध्यमं लोकमाश्रितं ।
प्रेधत्[ख] सत्येन सत्ये[ग] वै स[४] एष स्तुतवानृतं[५][घ] ॥४३॥
रवेणान्तरस्यैः चित्रैः[६]स्थितो व्योमन्येष मायया ।
ऋतस्य श्लोक[ङ] इत्येष पुनरेवैनं ततोऽब्रवीत् ॥४४॥
वास्तु[च] प्रयच्छंल्लोकस्य मध्यमस्य तु पाति यत्[७] ।
तेन वास्तोष्पतिं प्राह चतुर्भिरिममौर्वशः ॥४५॥
वाचा वेदा ह्यधीयन्ते वाचा छन्दांसि तत्र च ।
अथो[छ] वाक् सर्व्वमेवेदं तेन वाचस्पतिः स्तुतः[८] ॥४६॥

---

(१) एतच्छ्लोकार्द्धं ग० ङ० पुस्तकयोर्न विद्यते ।
(२) यामादेवेति क० घ० ।
(३) मनसेममिमं दृश्यमिति क० घ०, मनसेयं वुमादृश्यमिति ख०, मनसेमन्तु यद्दृश्यमिति ग० ।
(४) य इति ङ० पुस्तकान्तरञ्च ।
(५) ऋषिरिति क० घ० ।
(६) रसं स्थितौ रवेणार्त्तौ इति क० घ० ।
(७) पातितः इति क० घ० ।
(८) वाचा वेदा ह्यधीयन्ते इत्यादि तेन वाचस्पति स्तुत इत्यन्तं क० घ०, पुस्तकयोर्न विद्यते ।

---

(क) ऋ० ४, १६, १८। (ख) ऋ० ६, २३, ५। (ग) ऋ० ९, १०९, ६।
(घ) ऋ० १, ४१, ४। (ङ) ऋ० १, १९०, ४। (च) ऋ० ८, १५, ५।
(छ) ऋ० १, २८, ६।

न कुत[(१)]श्चैव[(२)] यद्भीतो हत्वा[(क)] तिष्ठति मध्यम ।
राहूगण ऋषिस्तेन प्राहेन गौतमो[(३)] दिति[(ख)] ॥४७॥
प्रजाभ्यस्त्वेष यच्छक्त एष वीर' शिव सुख[(४)]।
हिरण्यगर्भ[(ग)] स्तेनैनमृषिरस्तौत्[(५)]वाचकम् ॥४८॥
इह प्रजा प्रयच्छेति[(६)] सङ्गृहीता[(७)] प्रयाति[(८)] च ।
ऋषिर्विवस्वत पुत्र तेनाहैन पुन[(९)] र्यम[(घ)] ॥४९॥
मित्रौहत्य जना विश्वे यदिम[(१०)] पर्य्युपासते ।
मित्र[(ङ)] इत्याह तेनैन विश्वामित्र[(च)] स्तुवन् स्वयम् ॥५०॥
निदाघमासातिगमे यद्दृते भावति चितिम्[(११)] ।

---

(१) नकुत इति ख०, न कुत इति ग० ।
(२) एव इति क० घ० ।
(३) गोतम इति क० घ० ।
(४) प्रजाभ्यस्त्वेष यच्छम्मंकमिच्छन्मनसा सखम् इति ख० ग० ।
(५) एव तिति ख०, इच्छन् इति ग० घ० पुस्तकान्तरेषु ।
(६) प्रयच्छन् च इति ख० ग०, नियच्छद्विति क० घ० ।
(७) सङ्गृहीतेति ग० घ०, पुस्तकान्तरेषु ।
(८) सङ्गृहीताह याति इति घ० ।
(९) यमः इति क० घ० ।
(१०) मैत्र ह्यैजंना विश्वे यदेते इति क० घ०, यदिमे इति ख० ।
(११) यदि सैनावरीतितमिति क० घ०, यदतेन च निदाति इति ख० ।

---

(क) ऋ० १०,९०,१। (ख) ऋ० ४,४,११। (ग) ऋ० १०,१२१,१।
(घ) ऋ० १, ७४, १०। (ङ) ऋ० १, २१, ६। (च) ऋ० ३, ५९, ९।

विश्वस्य जनयन् कर्म विश्वकर्मा[क] च तेन सः[१] ॥५१॥
सरांसि घृतवन्त्यस्य सन्ति लोकेषु यत्त्रिषु ।
सरस्वन्त[ख]मिति प्राह वाचं प्राहुः सरस्वतीम्[ग][२] ॥५२॥
प्राणभूतस्तु भूतेषु यद्वितत्येह[३] तिष्ठति ।
तेनैनं वेन[घ]माहर्षिर्वेनो[ङ]नामेह[४] भार्गवः ॥५३॥
सहजे मासि मास्येनमभिमत्य[५]ततो भजन्[६] ।
तेनैनं मन्यु[च]रित्याह मन्युरेव तु तापसः ॥५४॥
यदन्तकाले भूतानामेक[७] एव नयत्यसून् ।
तेनासुनीति[छ]रृक्षोऽयं स्तुवता श्रुतबन्धुना ॥५५॥
निदाघमासातिगमे जन्म मध्ये भवत्यपां[८] ।
नप्तार[ज]माह तेनैनमृषिर्दीर्घतमाः[झ]स्तुवन्[९] ॥५६॥

---

(१) त्विति क॰ घ॰ ।
(२) इतीमन्तु शृणो दीध्यनमौर्वयौ इति क॰ घ॰ ।
(३) यद्वितत्येष्विति ग॰, यद्विनवेन्द्रिति ख॰ पुस्तकान्तरञ्च ।
(४) प्याद्वाचन् वेनोऽन्यमेहेति क॰ घ॰ ।
(५) अभिवत्येति ख॰, अभिपत्येति ग॰ ।
(६) मासि मासीमामभितप्य वपोऽयशः इति क॰ घ॰ ।
(७) एय इति क॰ घ॰ ।
(८) मध्येऽस्य यत्त्वपामिति क॰ घ॰ ।
(९) त्वपामिति क॰ घ॰ ।

---

(क) ऋ॰ ८, ९८, २ । (ख) ऋ॰ १, १६४, ५२ । (ग) ऋ॰ ६, ६१, २ ।
(घ) ऋ॰ ९, २१, ५ । (ङ) ऋ॰ १, ८३, ५ । (च) ऋ॰ २,२४,१४ ।
(छ) ऋ॰ १०, १५, ४ । (ज) ऋ॰ २, ३५, १४ । (झ) ऋ॰ २,१९,८ ।

पुष्यन् क्षितिं[१] पोषयति प्रणुदन् रश्मिभिस्तमः[२] ।
तेनैनमस्तौत् पूषेति भरद्वाजस्तु पञ्चभिः ॥ ६५ ॥
त्रीणि भान्ति रजांस्यस्य यत्पदानि तु तेजसा[३] ।
तेन मेधातिथिः प्राह विष्णु[क]मेनं[४] त्रिविक्रमम् ॥ ६६ ॥
कृत्वा सार्धं पृथग्याति[५] भूतेभ्यस्तमसोऽत्यये ।
प्रकाशं किरणैः कुर्वंस्तेनैनं केशिनं[ख] विदुः ॥ ६७ ॥
सम्प्रत्येकैकशस्त्वेनं[६] यन्मन्यन्ते पृथङ्नराः ।
विश्वे[ग] वैश्वानर[७][घ] स्तेन कर्मणा स्तुतिषु स्तुतः ॥ ६८ ॥
वृषे[ङ]व कपिलो[८],[च] भूत्वा यन्नाकमधिरोहति ।
वृषाकपि[छ]रसौ तेन विश्वस्मादिन्द्र उत्तरः[ज] ।
रश्मिभिः कम्पयन्नेति वृषा वर्षिष्ठ[झ] एव सः ॥ ६९ ॥

---

(१) उद्यन् क्षितिमिति क० घ० ।
(२) ततः इति ख० ।
(३) तेजसः इति क० घ० ।
(४) एतमिति क० ख० घ० ङ० ।
(५) सौर्ये पृथक् तेऽपी इति क० घ० ।
(६) सं प्रत्येकैकशस्त्वेनेति क० घ० ।
(७) वैश्वानरः (ग) इति क० घ० ।
(८) वृषेव कपिल इति क० घ०, वृषैकवकपिल इति ख० ग० ।

---

(क) ऋ० ६, ५४, १० । (ख) ऋ० १, १०, ३ । (ग) ऋ० १, ३, ७–९ ।
(घ) ऋ० १, १८६, १ । (ङ) ऋ० १, ५८, ६ । (च) ऋ० १, ७, ८ ।
(छ) ऋ० १०, ८६, १६ । (ज) ऋ० १०, ८६, १ । (झ) ऋ० ८, १८, ९ ।
(ञ) ऋ० १, १०, ६ ।

सायाह्नकाले भूतानि स्वापयन्नस्तमेति यत् ।
वृषाकपि[क]रितो[१] वा स्यादिति मन्त्रेषु दृश्यते ॥७०॥
त्रिषु धन्वे[ख]ति[२] चैन्द्रेण प्रत्युक्तो वारिषाकपे[३] ।
विष्णातेर्विशतेर्वा स्याद्वेवेष्टेर्व्याप्तिकर्मणः ।
विष्णुर्निरुच्यते वातः सर्व्वं सर्व्वान्तरस्य सः[४] ॥ ७१ ॥
पञ्च पञ्चिंशतिश्चैव यानि नामानि सप्त च ।
मध्यगाग्नीन्द्रसूर्य्याणां तान्युक्तानि यथाक्रमम् ॥ ७२ ॥
नैपातिकानां नाम्नां तु प्रागुक्तैर्नामलक्षणैः ।
सम्पन्नानां पृथक्त्वेन परिसङ्ख्या न विद्यते ॥ ७३ ॥
पार्थिवी[ग] मध्यमा[घ] दिव्या वागपि त्रिविधा तु या ।
तस्याः सूक्तानि नामानि यथास्थानं निबोधत ॥ ७४ ॥
कात्स्न्येन्तु भजते सूक्तमेता[५]नद्यः स्तुता[६]भुवि ।

---

(१) यतः इति पुस्तकान्तरं ।
(२) धान्वेतीति ग० त्रिषुधन्वेतीति ङ० ।
(३) वृषाकपे(ङ) इति ख० ।
(४) रश्मिभिः कम्पयन्नेतीत्यादि सर्व्वं सर्व्वान्तरस्य स इत्यन्तपाठः क० घ० पुस्तकयोर्नेष्यते ।
(५) ह्येषा इति क० घ०, एषा इति ख० ग० ।
(६) तदेति क० घ० ।

---

(क) ऋ० १०, २७, १९ । (ख) ऋ० १, ३८, ७ । (ग) ऋ० ८, २५, ९ । (घ) ऋ० ६, २५, १ । (ङ) ऋ० १०, ८६, १०—२२ ।

यं वै चैन(१) भजन्त्यापो(२) यदा(३) चौषधयः सदा(४) ॥ ७५ ॥
अरण्यानी(क) च रात्री(ख) च श्रद्धा(ग) घोषाः(५)(घ) सरस्वती ।
पृथिवी चैव नामैषा स्तुता(ङ)द्या च भजन्ति च(६) ॥ ७६ ॥
अग्नायी(च)नामतोऽप्येषा(७) स्तुताग्नेयेषु(८) केषुचित् ।
स्तुता निपात(छ)मात्रेण तत्र तत्रेव दृश्यते ॥ ७७ ॥
मध्ये सत्यदिति(ज)र्वाक्च(९) स्तुता चैषा सरस्वती ।
समग्रं भजते सूक्तं त्रिभिरेव तु नामभिः ॥ ७८ ॥
एषैव दुर्गां स्तुतवर्ष(झ) छत्वा(१०) स्यात् सूक्तभागिनी(११) ।

---

(१) यदा चैनमिति क० ख० घ०, यच्च वैनमिति ग० ।
(२) भवन्त्याप इति ख० ।
(३) तदेति क० घ० ।
(४) तथेति क० घ० ।
(५) चैषेति क० ख० घ० ।
(६) स्तुता या भजते स्तुचीति क०, यामभजते स्तुचीति घ० ।
(७) चग्नायीका च नामैवेति क० घ० ।
(८) स्तुताग्नेयीष्विति क० घ० ।
(९) वाक्यमिति क० घ०, मध्यसत्यादितिर्वाक्चेति ख० ।
(१०) सत्येति ङ० पुस्तकान्तरस्थ ।
(११) एषैव दुर्गां स्तुतवर्षमिति श्लोकार्द्धं क० घ० पुस्तकयोर्न विद्यते ।

---

(क) ऋ० १०,१४६,४ । (ख) ऋ० १,११३,१ । (ग) ऋ० ७,३२,१४ ।
(घ) ऋ० १,४६,१ । (ङ) ऋ० १०,१६२,५ । (च) ऋ० ५,४६,८ ।
(छ) ऋ० ४,५५,१ । (ज) ऋ० १,४३,२ । (झ) ऋ० ७,६६,११ ।

तन्नामानि य[१] मिन्द्राणी सरमा[क]रोमशो[ख]र्वशी[ग] ॥७९॥

भवत्पथ्या[घ]सिनीवाली[२][ङ] राका[च] चानुमतिः[३][छ] कुहूः।

गौर्धेनुर्देवपत्न्योऽन्या[४] पथ्या स्वस्त्यथ[५] रोदसी।

नैपातिकानि पृथग्भाञ्जि[६] येषां नामानि कानिचित् ॥८०॥

यदा तु वाग्भवत्येषा[७] सूर्याऽमुं लोकमाश्रिता।

तदा सूक्तमुखा[८][ज] भूत्वा सूर्या[झ] च भजतेऽखिलम्। ८१॥

वृषाकपाय्यूर्व[ञ] भूत्वा सरण्यू[ट]र्द्व च ते भुवम्[९]।

---

(१) सूक्तार्धभागीयमिति क॰ घ॰। सूक्तार्धभाग्नीयमितिपाठो विशुद्धः।

(२) ऋचपत्त्वथ्या(ठ)सिनीवालीति क॰ घ॰, भवत्त्वगन्या सिनीवालीति ख॰, भवत्ययया सिनीवालीति ग॰।

(३) राकोपानुमतिरिति क॰, राकोपानुमितिरिति घ॰, राका चानुमितिरिति पुस्तकान्तरम्।

(४) गौर्गौर्धेनुपत्न्योऽन्या इति क॰ घ॰, देवपत्न्योऽन्या इति ख॰ पुस्तकान्तरञ्च।

(५) स्वस्ति चेति ख॰, स्वस्त्येति ग॰ ङ॰ पुस्तकान्तरञ्च।

(६) नैपातिकान् पृथग्भाक्षीति क॰।

(७) भजत्येवेति क॰ घ॰।

(८) सूक्तमुखेति ख॰ ग॰, तथा सूक्तमुघेति ङ॰ पुस्तकान्तरञ्च।

(९) त्वेव तद्रूपमिति क॰ घ॰, ते भुवमिति पुस्तकान्तरम्।

---

(क) ऋ॰ १, ६२, ३। (ख) ऋ॰ १, १२६, ७। (ग) ऋ॰ ५, ४१, १९।
(घ) ऋ॰ ३, ५४, ५। (ङ) ऋ॰ ११, ३२, ८। (च) ऋ॰ ११, ३२, ८।
(छ) ऋ॰ १०, ५९, ६। (ज) ऋ॰ २, १८१, ६। (झ) ४, ४४, १।
(ञ) ऋ॰ ७, ६६, ११। (ट) ऋ॰ १०, १७, २। (ठ) ऋ॰ ७,८७,४।

निपातमात्रं भजते द्यविद्ध(१) पृथिवी सती ॥ ८२ ॥
सूर्यामिव(२) सतीमेतां गौरीं वाचं सरस्वतीम्।
पञ्चाशो वैश्वदेवेषु निपातेनैव केवलाः(३) ॥ ८३ ॥
घोषा(क) गोधा(ख) विश्ववारा(ग) पालोपनिषन्निषत्(४)।
ब्रह्मजाया(घ) जुहू(ङ)र्नामागस्त्यस्य(५)(च) स्वसाऽदितिः(छ) ॥ ८४ ॥
इन्द्राणी चेन्द्रमाता(६) च सरमा(ज) रोमशो(झ)र्वशी(ञ)।
लोपामुद्रा(ट) च नद्यश्च यमी(ठ) नारी च शश्वती(७)(ड) ॥ ८५ ॥
श्रीर्लक्ष्मीः सार्पराज्ञी(८) वाक् श्रद्धा मेधा च दक्षिणा।
रात्री सूर्या(ढ) च सावित्री ब्रह्मवादिन्य ईरिताः ॥ ८६ ॥

---

(१) द्यविस्तु इति क॰ घ॰, द्युवचेति ग॰।
(२) पृथिवी त्विति क॰ घ॰।
(३) केवलामिति क॰ घ॰।
(४) पालोपनिषन्निषत् इति क॰ ख॰ घ॰ ङ॰।
(५) छन्दोऽनुरोधात् नाम अगस्त्यस्येति पाठः समीचीनः।
(६) चन्द्रमातेति ख॰।
(७) शश्वतीति क॰ घ॰, तथैव चेति ख॰।
(८) सार्व्वराज्ञेति ख॰।

---

(क) ऋ॰ १०, ४०, ५। (ख) ऋ॰ ८, ६९, ९। (ग) ऋ॰ ५, ४, ९।
(घ) ऋ॰ १०, १०९, २। (ङ) ऋ॰ १, ५८, ४। (च) १०, ६०, ६।
(छ) ऋ॰ १, ४३, २। (ज) ऋ॰ १, ६२, ३। (झ) ऋ॰ १, १२६, ७।
(ञ) ऋ॰ ५, ४१, १९। (ट) ऋ॰ १, १७९, ४। (ठ) ऋ॰ १०, १०, ९।
(ड) ८, १, ३४। (ढ) ऋ॰ ४, ४४, १।

मेवकः प्रथमस्त्वासां[१] वर्गं[२] तुष्टाव देवताः ।
ऋषिभिर्देवताभिश्च समूदे[३]मध्यमो गणः ॥ ८७ ॥
आत्मनो भाववृत्तानि जगौ वर्गस्तथोत्तमः ।
उत्तमस्य तु वर्गस्य स ऋषिः सैव[४] देवता[५] ॥ ८८ ॥
आत्मानमस्तौद्वर्गस्तु देवतां यस्तथोत्तमः[६] ।
तस्मादात्मस्तवेषु स्याद ऋषि. सैव[७] देवता ॥ ८९ ॥
संवादेष्वाह वाक्यं यः स तु तस्मिन् भवेदृषि.[८] ।
यस्तेनोच्येत वाक्येन देवता तत्र[९] सा भवेत् ॥ ९० ॥
उच्चावचेषु चार्थेषु निपाताः समुदाहृताः ।
कर्मोपसंग्रहार्थे च[१०] क्वचिच्चौपम्यकारणात् ॥ ९१ ॥
ऊनानां पूरणार्थावा[११] पादानामपरे क्वचित् ।

---

(१) तास्वामिति ख० ।
(२) वर्गा इति क० घ० ।
(३) समूहे इति क०, समुद्रे इति ख० ।
(४) ऋषिश्चैव चेति घ० ।
(५) आत्मनो भाववृत्तानीत्यादि स ऋषि सैव देवता इत्यन्तपाठ क० घ० पुस्तकयोर्न विद्यते ।
(६) देवता चोत्तमस्तु स इति क० घ० ।
(७) आत्मस्तवेष्वेवं भवेद्दृष्टैवेति क० घ० ।
(८) भवत्यृषिरिति क० घ० ।
(९) तेष्विति क० घ० ।
(१०) कर्मोपसंग्रहार्थन्त्विति क० घ० ।
(११) पूरणार्थन्त्विति क० घ० ।

मिताक्षरेषु ग्रन्थेषु पूरणार्थास्त्वनर्थकाः[१] ॥८९॥
कमीमिद्विति[२] विज्ञेया ये त्वनेकार्थकाश्च ते[३] ।
इव न चित्तु चत्वार[४] उपमार्था भवन्त्यमी[५] ॥९०॥
उपमार्थे[६] मकारस्तु क्वचिदेव निपात्यते ।
मिताक्षरेषु ग्रन्थेषु प्रतिषेधस्त्वनेकधा[७] ॥९१॥
इयन्त[८] इति सङ्ख्यानं निपातानां न विद्यते ।
प्रयोजनवशा ह्येते[९] निपात्यन्ते पदे पदे ॥९२॥
उपसर्गास्तु विज्ञेयाः क्रियायोगेषु[१०] विंशतिः ।
विशेषयन्ति ते ह्यर्थां[११] न्नामाख्यातविभक्तिभिः[१२] ॥९३॥

---

(१) पूरणार्थं त्वनर्थकाः इति क० घ० ।
(२) चामिमिद्वतीति ख० ।
(३) त्वन्ये त्वार्थकाः स्मृताः इति क० घ० ।
(४) इवोनचिन्नुचत्वार इति ग० । इवेनचिन्नुचत्वार इति घ० ।
(५) भवन्ति ते इति ख० ग० घ० ।
(६) उपमार्थे इति ग० घ० ।
(७) त्वनेकधा इति ख० ग० घ० ।
(८) इयन्तु इति ख० ।
(९) वशात् प्रकरणस्यैते इति ग० घ० । वशा प्रकरणस्यैते इति ख० ।
(१०) क्रियायोगेनेति ख० ग० घ० ।
(११) ते त्वर्थमिति ग० घ० । ह्यर्थानिति ख० ।
(१२) विभक्तिभ्य इति ख० । विभक्तिषु इति ख० ग० घ० ।

वाक्यजं व्यतिकीर्णञ्च निर्वाच्यं पञ्चधा पदम् ॥१०६॥
द्विगुर्द्वन्द्वोऽव्ययीभावः कर्मधारय एव च ।
पञ्चमस्तु बहुव्रीहिः षष्ठस्तत्पुरुषः स्मृतः ॥१०७॥
विग्रहान्निर्वचः कार्यं समासेष्वपि तद्धिते ।
प्रविभज्यैव निर्ब्रूयाद्दण्डार्हो दण्ड्य इत्यपि ॥१०८॥
भार्य्या रूपवती चास्य रूपवद्भार्य्य इत्यपि ।
इन्द्रश्च सोमश्चेत्येवमिन्द्रासोमौ निदर्शनम् ॥१०९॥
शब्दरूपं पदार्थश्च व्युत्पत्तिः प्रकृतिर्गुणः ।
सर्व्वमेतदनेकार्थं दृष्टानवगमे गुणः ॥११०॥
सामान्यवाचिनः शब्दा विशेषे स्थापिताः क्वचित् ।
पलायने चचाद्वन्ति कौतुमर्या इतीष्यते ॥१११॥
विशेषवाचिनस्त्वन्ये सामान्ये स्थापिताः क्वचित् ।
हिमेनाग्निमिति मन्त्रे हिमशब्दो निदर्शनम् ॥११२॥
पदमेकं समादाय द्विधा कृत्वा निरुक्तवान् ।
पुरुषादः(ख) पदं यास्को वृषे वृषे इति त्वृचि ॥११३॥
अनेकं कृत्स्नया चाप्येकमेव निरुक्तवान् ।
अरणो मामकम्मन्त्रे मामकादिपदेन तु ॥११४॥
पदव्यवायेऽपि पदे एकीकृत्य निरुक्तवान् ।
गर्भं निधानमित्येते न जामय(ग) इति त्वृचि॥११५॥
पदजातिरविज्ञाता सः पदार्थः भिन्नामभि ।

---

(ख) ऋ० १०, २७, २२। (ग) ऋ० १,२२,१८।

वाक्यजं व्यतिकीर्णञ्च निर्वाच्यं पञ्चधा पदम् ॥१०६॥
द्विगुर्द्वन्द्वोऽव्ययीभावः कर्मधारय एव च।
पञ्चमस्तु बहुव्रीहिः षष्ठस्तत्पुरुषः स्मृतः ॥१०७॥
विग्रहान्निर्वचः कार्यं समासेष्वपि तद्धिते।
प्रविभज्यैव निब्रूयाद्दण्डार्हो दण्ड्य इत्यपि ॥१०८॥
भार्या रूपवती यास्य रूपवद्भार्य इत्यपि।
इन्द्रश्च सोमश्चेत्येवमिन्द्रासोमौ निदर्शनम् ॥१०९॥
शब्दरूपं पदार्थश्च व्युत्पत्तिः प्रकृतिर्गुणः।
सर्व्वमेतदनेकार्थं द्यालवगमे गुणाः ॥११०॥
सामान्यवाचिनः शब्दा विशेषे स्थापिताः क्वचित्।
पलायने यथाश्विं कौतुमर्थी इतीर्यते ॥१११॥
विशेषवाचिनस्त्वन्ये सामान्ये स्थापिताः क्वचित्।
हिमेनाग्निमिति मन्त्रे हिमशब्दो निदर्शनम् ॥११२॥
पदमेकं समादाय द्विधा कृत्वा निरुक्तवान्।
पुरुषादः[क] पदं यास्को वृचे वृचे इति त्वृचि ॥११३॥
अनेकं सप्तधा चान्यदेकमेव निरुक्तवान्।
अरुणो मासकृन्मन्त्रे मासकृदिति वेव तु ॥११४॥
पदव्यवायेऽपि पदे एकीकृत्य निरुक्तवान्।
गर्भं निधानमित्येते न आमय[ख] इति त्वृचि ॥११५॥
पदजातिरविज्ञाता त्वः पदार्थः सिनामनि।

---

(क) ऋ० १०, २७, २२। (ख) ऋ० १,२३,१६।

 

स्वरानवगमो धायि[क] वनेनेत्यृचि दर्शितः ॥११६॥
शुनःशेपं[ख] नराशंसं[ग] द्यावानः पृथिवीति च ।
निरस्ततेति प्रश्नतिरश्चादासीत् क्रमो यथा ॥११७॥
वर्णस्य वर्णयोर्लोपो बहूनां व्यञ्जनस्य च ।
अचाणीतिकपिर्नाभाद्[घ]नोयामित्यथास्तु च ॥११८॥
अर्थात् पदं स्वाभिधेयं पदाद्वाक्यार्थनिर्णयः ।
पदसङ्घातजं वाक्यं वर्णसङ्घातजं पदम् ॥११९॥
अर्थात् प्रकरणाल्लिङ्गादौचित्याद्देशकालतः ।
मन्त्रेष्वर्थविवेकः स्यादितरेष्विति च स्थितिः ॥१२०॥
इति नानान्वयोपायैर्नैरुक्तो यतेत यः ।
जिज्ञासुर्ब्रह्मणो रूपमपि दुष्कृत् परं भजेत् ॥१२१॥
यथेदमग्रे नैवासीदसदप्यथ वापि सत् ।
जज्ञे यथेदं सर्वं तद्भाववृत्तं वदन्ति तु ॥१२२॥
भावप्रधानमाख्यातं षड्विकारा भवन्ति ते ।
जन्मास्तित्वं परीणामो वृद्धिर्ह्रासं विनाशनम् ॥१२३॥
एतेषामेव पश्चात्तु येऽन्ये भावविकारजाः ।
ते यथावाक्यमप्यूह्याः सामर्थ्याच्छास्त्रवित्तमैः ॥१२४॥
देवानाञ्च पितॄणाञ्च नमस्कारैस्तथैव च ।
अथ व्यस्तं समस्तं वा शृणु व्याहृतिदैवतम् ॥१२५॥
व्याहृतीनां समस्तानां दैवतन्तु प्रजापतिः ।

---

(क) ऋ॰ १, १५८, ३ । (ख) ऋ॰ ५, २, ७। (ग) ऋ॰ १, १३, ३ ।
(घ) ऋ॰ ८, ७, ९ ।

व्यस्तानामयमग्निश्च वायुः सूर्य्यश्च देवताः ॥१२६॥
वाग्दैवत्योऽथ वाय्यैन्द्रो यदि वा परमेष्ठिनः।
ओङ्कारो वैश्वदेवो वा ब्राह्मो दैवः क एव वा) ॥१२७॥
भावप्रधानमाख्यातं षट्प्रकारा भवन्ति तु।
जन्मास्तित्वं परीणामो वृद्धिक्षातिर्विनाशनम् ॥१२८॥
एतेषामेव वर्णाः स्युरन्ये भावविकारजाः।
यथावचनमप्यूह्याः सामर्थ्यान्मन्त्रवित्तमैः ॥१२९॥
पौरुषेव लोके लिङ्गानि पुमान् स्त्र्यथ नपुंसकम्।
नामसूक्तप्रदेशेषु योज्यं प्रकरणं त्वतु ॥१३०॥
तेषां तु नामभिर्लिङ्गैर्यत्स्यं सर्वनामभिः।
कुर्वन्नामानि वै वाङ्करन्यदेवत्यथा यथा ॥१३१॥
यथेदमग्रे नैवासीदसदाप्ययथापि सन्।
अग्रे यथेदं सर्वन्तु भावस्तत्तं प्रचक्षते ॥१३२॥
वाग्देवत्योऽथ वाय्यैन्द्रो यदि वा परमेष्ठिनः।
ओङ्कारो वैश्वदेवो वा ब्राह्मो दैवः क एव वा ॥१३३॥
व्याहृतीनां समस्तानां दैवतं तु प्रजापतिः।
व्यस्तानामयमग्निश्च वायुः सूर्यश्च देवताः ॥१३४॥

इति शौनकाचार्यकृतौ बृहद्देवतायामुपोद्घातप्रकरणम्।

---

आग्नेयं प्रथमं सूक्तं मधुच्छन्दस आदितः[१]।
ज्ञेयास्त्वन्योऽन्यदेवत्या[२] सृचाः सप्तात उत्तराः ॥१२५॥
वायव्यः प्रथमस्त्वेषामैन्द्रवायव उत्तरः।
मैत्रावरुण आश्विन्य[३] ऐन्द्रो यः पञ्चमस्तृचः[४] ॥१२६॥
[५]नान्यः षष्ठादिदलिङ्गो गायत्रोऽन्यस्तु यस्तृचः[६]।
बहुदेवतमन्यत्तु[७] वैश्वदेवेषु गण्यते ॥१२७॥
सुषेदुवत्सो[८]ग्र्यातेति[क] गोतमेऽथ ऋजिश्वनि[ख]।
अवत्सारे[ग] परु[घ]च्छेपे[९] अत्रौ[१०] दीर्घतमस्यृ[ङ]षौ[११] ॥१२८॥

---

(१) आद्यंवकमिति ग० ङ०। घ० पुस्तकोद्धृतपाठश्च।
(२) सर्वेऽन्यदेवत्या इति ग० ङ०। घ० ज०।
(३) मैत्रावरुणोऽथाश्विन इति ख० ग० ङ०। घ० ज०।
(४) त्रिरूपो वै वैश्वदेवत इति ख०। अपैन्द्रोऽवो वैश्वदेवत्व इति ग०ङ०।
(५) तन्नामा विश्वलिङ्गो नेति ग० ङ०। घ० ज०।
(६) गायत्रोऽस्त्यपरस्तृचः इति क० घ० च०।
(७) बहुदेवतमन्यस्त्विति क० घ०। बहुदैवत्यमन्यस्त्विति ग०।
(८) सुषेऽथ वात्से इति ग० ङ०। घ० ज०।
(९) परुच्छेपे इति ग०। अवत्सारपरुच्छेपे इति ख०।
(१०) पुत्रे इति ख० ग० ङ०। घ० ज०।
(११) तत् एषौ इति ख०।

---

(क) ऋ० १, ५१, ७। (ख) ऋ० ८, ४६, १०। (ग) ऋ० ५, ४४, १०।
(घ) ऋ० १०, १००, ५। (ङ) ऋ० १, १५८, ६।

वसिष्ठे नाभानेदिष्ठे(क) गये(ख) मेधातिथौ मनौ(ग) ।
कक्षीवति((घ)१) विहव्ये(ङ) च बहुष्वन्येषु चर्षिषु(२) ॥१३९॥
अगस्त्ये बृहदुक्थे(च) च विश्वामित्रे च(३) गाथिनि(छ) ।
दृश्यन्ते विप्रवादाश्च(४) तासु तासु स्तुतिष्विह ॥१४०॥
यज्ञौनो पञ्चिपरासस्तु यस्मिन्नाम्ने प्रदृश्यते ।
आचार्यौ यास्कमाण्डिक्यौ वैश्वदेवं तमाहतुः(५) ॥१४१॥
पादं वा यदि वार्धर्चमृचं वा सूक्तमेव वा ।
वैश्वदेवं वदेत्सर्वं यत्किञ्चिद्बहुदेवतं(६) ॥१४२॥
ऋषिभिर्देवताः सर्वा विविधाभिः स्तुतिभिः स्तुताः ।
संज्ञा तु विधानिताश्चासां(७) अर्थान्तरैर्निपातितः(८) ॥१४२॥

---

(१) काक्षीवते इति ख॰ । कक्षीवते इति घ॰ ङ॰ ।
(२) चर्षिषु इति ख॰ ग॰ ट॰ । घ॰ ङ॰ ।
(३) विश्वामित्रेऽप्येति ख॰ ड॰ । घ॰ ङ॰ ।
(४) विप्रपादाश्चेति क॰ घ॰ च॰ ।
(५) तदाहतुरिति ग॰ ख॰ । घ॰ ङ॰ ।
(६) बहुदेवतमिति क॰ च॰ ।
(७) विश्वमित्येषेति ख॰ ग॰ ख॰ । घ॰ ङ॰ ।
(८) निपातितौ इति ख॰ । घ॰ ङ॰ ।

---

(क) ऋ॰ १०,६१,१८ । (ख) ऋ॰ ६,२,८ । (ग) ऋ॰ १,३६,१६ ।
(घ) ऋ॰ १,५१,१३ । (ङ) ऋ॰ १,१०५,६ । (च) ऋ॰ ३,२०,१० ।
(छ) ऋ॰ १,८,१ ।

सारस्वतः सप्तमस्तु[1] एताः प्रउगदेवताः[2] ।
अविद्यमान ऊने वा प्रउगेष्वत आवपेत्[3] ॥१४४॥
सरस्वती तु द्विविधा ऋक्षु सन्दृश्यते स्तुता[4] ।
नदीवच्चैव वाग्वच्च तयेवत्तुभयं स्तुतं[5] ॥१४५॥
[6]सुरूपकृत्नु[क]मित्यैन्द्रं सप्त पान्योऽन्यतः परं ।
पवादह[7] स्वधामिति मारुत्योऽनन्तरा ऋचः ॥१४६॥
एका वीलु[ख]चिदिन्द्रायं[8] मरुद्भिः सह गीयते ।

---

(१) सारस्वतस्तु सप्तम इति ग० ङ० । घ० ङ० ।

(२) सारस्वतस्तु उत्तरमष्टमा प्रउगदेवता इति ख० ।

(३) अविद्यमान इत्यादिश्लोकार्द्धं ख० ग० ङ० चिह्नितपुस्तकेषु नोप-लभ्यते ।

(४) ऋक्षु सर्वासु सा स्तुतेति ग० ङ० । घ० ङ० ।

(५) नदीवद्देवतावच्च तृचाचार्य्यस्तु शौनक इति ख० । अत्र तृचाचार्य्य इति ग० ङ० । घ० ङ० ।

(६) इत. पूर्वं ख० ग० ङ० । घ० ङ० चिह्नित पुस्तकेषु नदीवन्निगमा-घट्टे सप्तमो नेत्युवाच ह । अम्बेकाय दृषद्वत्या चित्रश्च सरस्वती । इयं शुष्मेभिरित्येतं मेने यास्कस्तु सप्तमम् । षष्ठी सारस्वतस्यैता याज्या मैत्रायणीयके । प्राधान्याद्धविषः षष्ठम् वाच एवेतरो-ऽब्रवीत् । इत्यधिकं पठ्यते ।

(७) वषादह इति ख० यथादह इति घ० ।

(८) एकाविद्युचिमिन्द्रायमिति क० । एकाविद्युचिदिन्द्रायेति ख० । एकापोलुचिदिन्द्रायेति ग० । एकावालुचिदिन्द्रायेति ङ० ।

---

(क) ऋ० ३, ४, २ । (ख) ऋ० १, ६, ५ ।

तस्या एकान्तरायास्तु अर्धर्चन्तो[१]द्विदैवत ॥१४७॥
मरुद्गणप्रधानोऽयं ह्यैन्द्रस्तु[२] विचिकित्सित ।
मन्दू[क][३]समानवर्चसौ[४] मन्दुनावाथवर्चसा ॥१४८॥
मन्दू इति[ख] प्रपश्यन्ति[५] येषामेष[६] द्विदैवत ।
एकदैवत्यमाम्नायो विज्ञेयाध्ययनात् पद[७] ॥१४९॥
रोदसी[ग] देवपत्नीनामथर्वाङ्गिरसे[घ] यथा[८] ।
[९]मरुद्गणप्रधानेयमाचार्याणां मतिर्मता ॥१५०॥
मरुद्गणप्रधानत्वादिन्द्रस्तु विचिकित्स्यते[१०] ।

---

(१) अर्धर्चोऽन्योद्विदैवत इति घ० ङ० । ग० ।
(२) ह्यैन्द्र चेति ख० ग० । घ० ङ० । मरुद्गणप्रधानो ह्यैन्द्र चेन्द्र इति ख० ।
(३) मन्दु इति ख० ।
(४) समानवर्चसमिति ग० । समानवर्चसा इति घ० ।
(५) मन्दू इति प्रपश्यन्तीति क० घ० ङ० च० ।
(६) एषमेवेति ख० । येषामेवेति ग० ङ० । घ० ङ० ।
(७) विज्ञायाध्ययनात्पदमिति ख० । विज्ञानाध्ययनात्पदमिति क० घ० ङ० ।
(८) रोदसी इत्यादि श्लोकार्धं क० ख० ग० चिह्नितपुस्तकेषु नोपलभ्यते ।
(९) मरुद्गणेति ङ० ।
(१०) विचिकित्सिता इति ख० ग० । घ० ङ० ।

---

(क) ऋ० १, ६, ७ । (ख) ऋ० १, ६, ७ । (ग) ऋ० १, १६७, ५ ।
(घ) ऋ० १०, १२, १ ।

मरुद्गणं महेन्द्रस्य[१] समाम्नं सकलं विदुः[२] ॥१५१॥
अग्निमित्यग्निदैवत्यं पादस्तच द्विदेवत.[३] ॥
निर्मथ्याहवनीयार्थावग्निनाग्नि.[४] समिध्यते ॥१५२॥
द्वितीये द्वादशर्चे तु प्रत्यृचं देवताः स्तुताः ।
स्तूयन्ते ह्यग्निना सार्द्धं तासां नामानि मे शृणु[५] ॥१५३॥
प्रथमायां स्तुतश्चेध्मो[क][६] द्वितीयायां तनूनपात्[ख] ।
नराशंस[ग] तृतीयायां चतुर्थ्यां स्तूयते त्विडः[घ] ॥१५४॥
बर्हि[ङ]रेव तु पञ्चम्या द्वारो[च] दैव्यस्ततोऽन्यया[७] ।
नक्तोषा सा तु सप्तम्यामष्टम्यां तु स्तुतौ[८] सह ॥१५५॥

---

(१) मरुद्गणमहेन्द्रस्येति घ० । मरुद्गणेनेन्द्रस्येति क० ख० ग० च० ।

(२) समास शाकलं विदुरिति क० ग० च० ।

(३) पादस्तत्र द्विदैवत इति ग० ङ० । घ० ङ० ।

(४) निर्मथ्याहवनीयार्थो ह्यग्निनाग्निरिति क० ग० । निर्मथ्याहवनीयार्थे ऽग्निनाग्निरिति च० ।

(५) स्तूयते देवताऽप्यासां नामानि शृणुते ह न इति क० ग० घ० ।

(६) समिद्धस्त्विति क० ग० च० ।

(७) अन्ययेति ख०, अन्यया इति च० ।

(८) सस्तुतौ इति ग०, स स्तुतौ इति ङ० पुस्तकान्तरञ्च ।

---

(क) ऋ० १३, ४५, २। (ख) ऋ० १, १३, २। (ग) ऋ० १, १३, ३।
(घ) ऋ० १, १२८, १। (ङ) ऋ० ३, ५३, १७। (च) ऋ० ५, ५, ५।

दैव्या(क)विति(१) तु होतारौ नवम्यामृचि संस्तुताः ।
तिस्रो देव्यो दशम्यां तु ज्ञेयस्त्वष्टे(ख)व तु स्तुतः ॥१५६॥
एकादश्यां तु सूक्तस्य स्तुति(२) विद्याद्वनस्पतिम्(ग) ।
द्वादश्यां तु स्तुता देव्यो विद्यात्स्वाहाकृती(घ)रिह(३) ॥१५७॥
सूक्तेऽस्मिन् प्रत्यृचं यास्तु(४) देवताः परिकीर्तिताः ।
ता एव सर्वास्वाप्रीषु द्वितीयाया(५) विकल्पते(६)॥१५८॥
प्रैषैः सहैव चैतानि त्वेकादश प्रपद्यते(७) ।
यजुष(८) प्रैषसूक्तं वा दृश्येतानीतराणि तु ॥१५९॥
सौत्रामण्यानि(९) तु त्रीणि प्राजापत्याश्वमेधिके ।

---

(१) दैव्याविति ख० ङ० ।
(२) स्तुतमिति ङ० ।
(३) देवी विद्यात्स्वाहाकृतीरितीति ग० ।
(४) प्रत्यृचे यास्त्विति क० ग० घ० ।
(५) द्वितीया त्विति ख० ।
(६) विकल्पते इति ख० ग० घ० ।
(७) प्रैषैः सहाप्रीसूक्तानि तान्येकादश सन्ति चेति ख० ग० ङ० । सहाप्री इत्यत्र सहैवेति ख० ।
(८) यजूंषीति ख० ग० ङ० ।
(९) सौत्रामणीतीति क० घ० ध० ।

---

(क) ऋ० १, २७, १२ । (ख) ऋ० १, ३२, २ । (ग) ऋ० ६, ४८, १७ ।
(घ) ऋ० १, १८८, ११ ।

पुरुषस्य च यन्मेधे यजुःष्वेव तु तच्च यत्[१] ॥१६०॥
अत्रैव प्रैषसूक्तं स्याच्च यजुःष्वाद्रियेत तत्[२] ।
तेषां प्रैषकृतं[३] यच्च यच्च[४] दीर्घतमा जगौ ॥१६१॥
मेधातिथं[५] यदुक्तं च चौष्येवोभयवन्ति तु ।
ऋषिर्गृत्समदो[क][६] यच्च वाध्र्यश्व[ख]स्तु[७] यदुच्यते ॥१६२॥
नराशंसवदत्रि[ग]स्तु[८] ददृशेऽथ[९] यदौर्वशः ।
तनूनपादगस्त्यस्तु[१०] जमदग्नि[घ]स्तु[११] यज्जगौ ॥१६३॥
विश्वामित्र[ङ] ऋषिर्यश्च जगौ वै काश्यपोऽसितः[च] ।
मेधातिथेस्त्वृचां[१२] यास्तु प्रोक्ता द्वादश देवताः ॥१६४॥

---

(१) तानि यद्विति ख० ग० ङ० ।
(२) यजुष्वादि येषु चेति क० घ० च० ।
(३) प्रैषगतं सूक्तमिति ग० ।
(४) यच्च तच्चेति ख०, यत्तु तच्चेति ङ० पुस्तकान्तरञ्च ।
(५) मेधातिथेरिति ख०, मेधातिथाविति ग० ङ० पुस्तकान्तरञ्च ।
(६) ऋषौ गृत्समदे इति ग० ङ० पुस्तकान्तरञ्च ।
(७) वाध्र्यश्वे चेति ग० ङ० पुस्तकान्तरञ्च ।
(८) अत्रेश्चेति ख० ग० ङ० पुस्तकान्तरञ्च ।
(९) ददर्श चेति ख० ग० ङ० पुस्तकान्तरञ्च ।
(१०) चेति ग० ङ० पुस्तकान्तरञ्च ।
(११) वामदेवश्चेति ग०, जामदग्न्यश्चेति ङ० पुस्तकान्तरञ्च ।
(१२) ऋचः इति ख० ग० ङ० पुस्तकान्तरञ्च ।

---

(क) ऋ० २, १९, ८ । (ख) ऋ० १०, ६९, ५ । (ग) ऋ० १, १३९, ९ ।
(घ) ऋ० ३, ५३, १५ । (ङ) ऋ० ३, ५३, ९ । (च) ऋ० १, ४६, १० ।

सम्पद्यन्ते यथाग्नीकाः(१) सम्यक् तां निबोधत ।
दृष्टो(क)यः सोऽय(२)मेवाग्निरयं द्यौभो(ख)(३) समिध्यते ।
भातेवैतत्कृतं(४) रूपं भातो(ग) द्यौभाः(५) समिध्यते(घ) ॥१६५॥

इति बृहद्देवतायां द्वितीयोऽध्यायः ।

---

(१) यथाग्निं वाः इति ख० ग० ङ० पुस्तकान्तरेषु।
(२) सर्व्वमिति ख० ग० ङ० पुस्तकान्तरेषु ।
(३) द्यौभ्यः इति ग० ङ० पुस्तकान्तरेषु ।
(४) भ्रातैर्वैतत्स्तवमिति क० ग० घ० ध० ।
(५) द्यौभ्ये इति ग० ङ० पुस्तकान्तरेषु ।

---

(क) ऋ० ८, ४६, २ । (ख) ऋ० ७, १, १६ । (ग) ऋ० ५, ६, ५
(घ) ऋ० ४, १५; ४ ।

## अथ तृतीयोऽध्यायः ।



तनूनपाद्यन्त्वेव नाम्ना सोऽप्युच्यते तनूः[१] ।
नपा[क]दिति प्रजामाहुरग्नेस्तस्य[२] च सम्भवम् ॥ १ ॥
नराशंसस्त्विहैके तु[३] होतृभिस्त्वाहुरध्वरे[४] ।
नराः शंसन्ति सर्व्वेऽस्मिन्नासीना इति वादिनः[५] ॥ २ ॥
तदाहुरग्निमेवाय[६] नराशंसोऽध्वरे त्वयम्[७] ।
नरैः प्रशस्त आसीनैराहुश्च ऋत्विजो नराः[८] ॥ ३ ॥
इळा त्विति कृतं रूपं ऋषिभिर्गतिकर्मणः[९] ।

---

(१) यच्चात्यसौ तनुमिति ख॰ ग॰ ङ॰ पुस्तकान्तरेषु ।
(२) अमुतोऽस्येति ख॰ ग॰ ङ॰ पुस्तकान्तरेषु ।
(३) नराशंसमिहैके त्विति ख॰ ग॰ ङ॰ पुस्तकान्तरेषु ।
(४) अग्निमाहुरथेतरे इति ग॰ ङ॰ पुस्तकान्तरेषु ।
(५) वाऽध्वरे इति ग॰ ङ॰ पुस्तकान्तरेषु ।
(६) एतमेवाहुरन्येऽग्निमिति ग॰ ङ॰ पुस्तकान्तरेषु ।
(७) त्वयमिति ख॰ ग॰ ङ॰ पुस्तकान्तरेषु ।
(८) चैवलिंगो नर इति ख॰ ग॰ ङ॰ पुस्तकान्तरेषु ।
(९) इडस्त्विषिकृतं रूपमीडेश्च स्तुतिकर्म्मणः इति ग॰ ङ॰ पुस्तकान्तरेषु । इड इत्यत्र इय, इंडेश्च इत्यत्र ईड्योश्चेति ख॰, स्तुतिकर्म्मणः इत्यत्र, गतिकर्म्मणेति घ॰ ।

---

(क) ऋ॰ १, १४३, १ ।

द्रवणा[क]स्तेन चोक्ताग्निर्द्रविणा[ख][१]गतिकर्मणा[२] ॥ ४ ॥
बर्हि[ग]रेवायमग्निस्तु सर्वं हि परिबृंहितम् ।
अनेन यः स्तुतो[३] वाथचिह्नेन परिदृश्यते[४] ॥ ५ ॥
द्वार[घ]स्तु[५] देव्यो याः प्रोक्ता विश्वेषां तास्तु यत्नतः ।
अग्नायी[ङ]मनुवर्त्तन्ते तथाग्नाय्यग्निमेव च[६] ॥ ६ ॥
अग्नौ ध्रुवं स्थितास्तास्तु[७] स्तूयन्ते चाग्निना[८] सह ।
प्राधान्यन्तास्तु चैवाग्नेः स्तुतिष्वय[९]हविःषु च ॥ ७ ॥
नक्तोषा सा[१०] च ये देव्यावाग्नेय्यावेव ते स्मृते ।

---

(१) द्रविणेति म०, द्रंविणेति ख० पुस्तकान्तरञ्च ।
(२) वर्धिकर्म्मिणेति ग०, वर्धिकर्म्मणेति ख०, वृद्धिकर्म्मणेति पुस्तकान्तरं ।
(३) यश्रुत इति ग० ख० पुस्तकान्तरञ्च ।
(४) परिबृंहित इति ग० घ० ङ० ।
(५) द्वारस्त्विति ख० ग० ङ० पुस्तकान्तरञ्च ।
(६) आग्नायीमन्ववर्त्तन्त नाग्निं नाग्नाय्य एव चेति ख० ग० घ० ।
(७) ध्रुवास्थितास्तास्त्विति ख० ग० घ० ।
(८) संस्तूयन्तेऽग्निनेति ख० ग० ङ० ।
(९) स्तुतिष्वेवेति ग० ङ० पुस्तकान्तरञ्च ।
(१०) नक्तोषाऽसौ इति ख० ग० ङ० पुस्तकान्तरञ्च ।

---

(क) ऋ० ४, २, ५ । (ख) ऋ० ८, ८७, १ । (ग) ऋ० २, ५६, १७ ।
(घ) ऋ० १, १३, ६ । (ङ) ऋ० १, २२, १२ ।

श्यामाग्नेयी[१] हि कालस्य तस्यैवोषाः[क] कलैव तु[२] ॥ ८ ॥
तम उच्छन्त्यु[ख]षा नक्ता[ग] नक्तीमां हिमबिन्दुभिः ।
अपि वा[३] व्यक्तवर्णेति नञ् पूर्वां वे[घ]रिदं[४] भवेत्[५] ॥ ९ ॥
नास्त्रा भवत्युषा[६]श्चैव सैषा[७] प्रागुदयाद्रवेः ।
[८]षा हि वोषा[९] भवत्यादौ मध्ये प्राप्ते नमस्वती[१०] ॥१०॥
दैव्याविति[११] तु होतारावुभौ[१२] पार्थिवमध्यमौ ।

---

(१) भाव्यामेयीति ख०, श्यावामेयीति ग०, श्याव्यामेयीति ङ० पुस्तकान्तरञ्च ।
(२) किला(ख)ऽवमे(ग)ति क० घ० च० ।
(३) अभि वेति ख० ।
(४) वेरिदमिति ख० ।
(५) तम उच्छन्त्युषेति श्लोक क० घ० च० पुस्तकेषु न दृश्यते ।
(६) उषाः इत्यत्र उषेति पाठ संगतः ।
(७) प्रेषेति ख० ।
(८) ख० ग० ङ० पुस्तकेषु, वा हि वोषेति श्लोकार्द्धं, नाम्ना भवत्युषा चैवेति श्लोकार्द्धात् प्राक्, पठितं ।
(९) दोषेति क० घ० च० ।
(१०) निशीथे सा नमस्विनीति ख० ग० ङ० पुस्तकान्तरञ्च ।
(११) दैव्याविनीति ख० ग० ।
(१२) अमी इति ग० ङ० पुस्तकान्तरञ्च ।

---

(क) ऋ० १, ४६, १ । (ख) ऋ० १ ३२,४ । (ग) ऋ० ३, ५४, ५ ।
(घ) ऋ० १, ४६, १ । (ङ) ऋ० १, ७३, ७ । (च) ऋ० १,७९, ८ ।

दिव्यादग्नेस्तु(१) जज्ञाते देव्यौ तेनेह जन्मना(२)॥ ११ ॥
तिस्रस्तु देव्यो याः प्रोक्तास्त्रिस्थानैवेह सा तु वाक् ।
त्रिविधेनोच्यते नाम्ना ज्योतिःषु त्रिषु वर्त्तिनी ॥ १२ ॥
अग्निमेवानुगेला(३) तु मध्ये त्वैन्द्री(४) सरस्वती ।
अमुं स्थिताधिलोकन्तु(५) भारती भारतो सुधौ ॥ १३ ॥
सैषा त्रिविधा वै वाग्दिवि च व्योम्नि चेह च ।
व्यस्ता (६)चैव समस्ता च भजतेऽग्नीनिमानपि(७) ॥ १४ ॥
त्वष्टा यः सोऽयमेव (८)पार्थिवोऽग्निरिति श्रुतिः(९) ।
पार्थिवस्यास्य वर्णः स्युः कस्माप्युक्(१०)चात्तवेषु च(११) ॥ १५ ॥
त्विषित(क)स्त्वष्टुतो वा स्यात् (१२)तूर्णमश्नुवतीति वा(१३) ।

---

(१) चौति ख० ग० ङ० पुस्तकान्तरञ्च ।
(२) कथ्यत इति क० ख० ङ० च० ।
(३) अनुमैलेति ख०, अनुमेलेति क० ग० घ० ।
(४) मात्रेति ख० ग० ङ० पुस्तकान्तरञ्च ।
(५) स्थितविलोकन्त्विति क० घ० च० ।
(६) व्यस्तेति क० घ० च० ।
(७) भजत्यग्नीनिमानन्विति क० घ० च० ।
(८) त्वयामेवेति ख० ङ० पुस्तकान्तरञ्च, यत् स्वयं प्रोक्त इति ग० ।
(९) श्रुतिरिति ख० ग० ङ० पुस्तकान्तरञ्च ।
(१०) कास्थावीदिति ख०, कस्याप्युयिति ङ० पुस्तकान्तरञ्च ।
(११) पार्थिवो वाष्यान्वे च कौत्सा त्रिस्वर्त्तेनैव चेति क० घ० च० ।
(१२) तुच्छितो वा स्यादिति ख०, त्वचतेर्वा स्यादिति ग० ङ० पुस्तकान्तरञ्च ।
(१३) अश्नुत एव चेति ख० ग०, वा इत्यत्र चेति ङ० पुस्तकान्तरञ्च ।

---

(क) ऋ० १०, ८४, २ ।

कर्मसु त्वरणां वेत्ति [१]तेन नामैत[२]दश्नुते ॥१६॥

यः सहस्तमोजस्तु [३]रवेश्चन्द्रमुपाश्रितः[४] ।

सोऽयं[५] त्वष्टारमेवाग्निः [६]परं वन्दे च यन्मधु[७][क] ॥१७॥

प्रादाद्ब्रह्मा च [८]सुप्रीतः पुत्राय[९] यदथर्वणे[१०] ।

स चाभवदृषिस्तेन ब्रह्मणा वीर्यवत्तमः[११] ॥१८॥

तमृषि[१२]र्निषिषेधेन्द्रो [१३]मैवं वोचः [१४]कस्यचिन्मधु ।

न हि भोक्ते मधुन्यस्मिन् जीवन्तं त्वोत्सृजाम्यहं[१५] ॥१९॥

---

(१) कर्मसूत्तारणो वेत्तीति ग॰ ङ॰, वेत्तीत्यत्र वेत्तीति ख॰ पुस्तकान्तरञ्च ।

(२) नाम्नैतदिति ख॰ ।

(३) सहस्तमो रश्मिरिति ग॰ ङ॰ ।

(४) चन्द्रमसोऽश्रित इति क॰ घ॰ च॰ ।

(५) सोऽप्यौति ख॰ ग॰ ङ॰ पुस्तकान्तरञ्च ।

(६) अग्निमिति ग॰ ङ॰ पुस्तकान्तरञ्च ।

(७) वेदवतं मनुमिति ख॰, वेद च यन्मध्विति ग॰, वेद च यन्मध्विति ङ॰, देव च यन्मध्विति पुस्तकान्तरं ।

(८) अपीति ख॰ ग॰ ङ॰ पुस्तकान्तरञ्च ।

(९) सुतायेति ख॰ ग॰ ङ॰ पुस्तकान्तरञ्च ।

(१०) तदथर्वेण इति ख॰ ग॰ ङ॰ पुस्तकान्तरञ्च ।

(११) दीप्तिमत्तरः इति ख॰ ग॰ ङ॰ पुस्तकान्तरञ्च ।

(१२) तं त्वृषिरिति क॰ घ॰ च॰ ।

(१३) निषिषिधेन्द्र इति क॰ घ॰ च॰ ।

(१४) मेदं वाचः इति क॰ घ॰ च॰ ।

(१५) मधौ ब्रह्मन् जीवनं त्वहमुत्सृजे इति क॰ घ॰ च॰ ।

---

(क) ऋ॰ १, ११६, १२ ।

तस्माद्ध सोऽय(१)मेवाग्निर्भवतीति विनिश्चयः ॥२९॥

अयं कर्त्ता च देवानां (२)साक्षात्त्वाष्टमिहैकजा ।

अयं प्रसूतिर्भूतानां स तेषा(३)मयमव्ययः ॥३०॥

तनूनपा(क)द्द्वितीया स्या (४)न्नराशंस(ख)वती च या ।

समस्यते (५)प्रयोक्तव्ये त्रिष्वेवोभयवत्स्विह(६) ॥३१॥

नराशंसवती वा स्या(७)द्द्वितीयेह (८)प्रजार्थिना ।

बलकामोऽथ वा यः स्या(९)द्भूरिमिच्छति वापि (१०)यः(११) ॥३२॥

आग्नेयमिति(१२) यत्त्वेभि(१३)र्वैश्वदेवमिहोच्यते ।

---

(१) स्वयमिति ग० ङ० पुस्तकान्तरेषु ।

(२) अयं हि कर्त्ता स्वाहानामिति ख० ग० ङ० पुस्तकान्तरेषु ।

(३) सर्वेषामिति ख० ग० ङ० पुस्तकान्तरेषु ।

(४) चेति ख० ग० ङ० पुस्तकान्तरेषु ।

(५) समस्येते इति ख० ग०, समस्यैते इति ङ० पुस्तकान्तरेषु ।

(६) उभयवत्स्विति ग०, उभयवत्तु स्विति ङ०, उभयवत्तु चेति पुस्तकान्तरं ।

(७) स्यादिति ग० ङ० ।

(८) चेति ख० ग० ङ० पुस्तकान्तरेषु ।

(९) धनकामो वेति ख० ग० ङ० पुस्तकान्तरेषु ।

(१०) भूतिमिच्छेद्यापीति ख० ग० ङ० पुस्तकान्तरेषु ।

(११) वेति ग० ।

(१२) आग्नेयं यज्ञमिति ख० ग० पुस्तकान्तरेषु, आग्नेये यज्ञमिति ङ० ।

(१३) यज्ञमेभिर्दवेति ख० ग० ङ० पुस्तकान्तरेषु ।

---

(क) ऋ० १, १८८, २ । (ख) ऋ० १, १४२, ३ ।

तद्दिष्वभिन्न गायत्र (क)वैश्वदेवेषु पठ्यते ॥२३॥
इन्द्रसोममितीन्द्र तु (१)यदा दशकमार्त्तवम् ।
तस्मिन् षडृतुना सप्त प्रत्यृच स्तौति देवताः ॥२४॥
तथर्त्तुनेति षट्सूक्तु ऋतस्त्वृतुभि सह ।
पुनर्द्वयोर्ऋतुनेति वक्त्यैकत्वविवक्षिता ॥२५॥
ऋतवो देवताभिश्च निपातेनेह सस्तुता ।
यथर्त्तुमिषसूक्ते च तथा गार्त्समदेऽपि च(२) ॥२६॥
मुख्यया त्विन्द्रमेवाग्नौ(३)मरुतस्तु द्वितीयया ।
तृतीयया तु त्वष्टारमग्निन्तु परया तत(४) ॥२७॥
पञ्चम्या तु पुन शक्र षष्ठ्या देवास्तथाश्विनौ ।
सप्तम्या चाभिरग्निन्तु चतुर्भिर्द्रविणोदस(ख) ॥२८॥
चादेशाद्दैवत श्रेयसूक्तेष्वाणा न(५) विद्यत ।
न मन्त्र चिह्नतोऽप्यासा(६) प्रातुन्त्वनेन दैवत(७) ॥२९॥

---

(१) इन्द्रसोम पिबतोममिति ख० ग० पुस्तकान्तरयो, इममिन्द्र इदमिति च० ।
(२) तथर्त्तुमिति षट्सूक्त इत्यादि तथा गार्त्समदेऽपि चेत्यन्तपाठ ख० ग० च० पुस्तकेषु न विद्यते ।
(३) मरुतोर्थमिति ख० ग०, मरुतोर्थमिति च० ।
(४) चतुर्थ्यां चापि मद चेति ख० ग० ।
(५) मन्त्राश्च स्विति ख० ग० च० ।
(६) ह्यासामिति ख० ग० पुस्तकान्तरयो ।
(७) देवतम् इति ख० ग० च० ।

---

(क) ऋ० १, २० ३ । (ख) ऋ० ८, ८८, १ ।

एकादश्या तु नासत्यौ(क) द्वादश्याग्निमिम पुनः ।
पृथक् पृथक् स्तुतीदन्तु सूक्तमाह रथीतरः (१) ॥४०॥
बह्वदैवे द्विदैवे(२) वा गुणैर्वा(३) यत्र कर्मजे ।
स्तूयते देवतैकैका विभक्तस्तुति(४) तद्विदुः ॥४१॥
वैश्वदेवानि सूक्तानि त्रिविधानि भवन्ति तु ।
सूर्यसप्तवयुक्त विश्वलिङ्ग पृथक्स्तुति (५) ॥४२॥
पृथक्स्तुति तु यत्प्रोक्त तद्विद्या(६)द्बहुदैवतम् ।
विश्वलिङ्गन्तु तच्च विद्ये स्वे कर्मजैर्गुणैः (७) ॥४३॥
विश्वानुद्दिश्य यद्देवान् स्तौति(८) सूर्यमनेकधा ।
देवानेवा(९)भिसंस्तौति त प्राह्. सूर्यसप्तवम् ॥४४॥
न तु भागोऽस्यसूक्तादौ(१०) न सूर्ये लौपधेषु वा(११)।

---

(१) रथान्तर इति ख॰ ।
(२) बह्वदैवतद्वन्द्वे इति क॰ ग॰ घ॰, बह्वदैवते द्वन्द्वे इति ख॰ ।
(३) गुणै स्तैरिति क॰ ग॰ घ॰ ।
(४) देवतैकाकामभक्तिस्तुतीति क॰ ख॰ ग॰ घ॰ ।
(५) पृथक् स्तुतीति निर्विसर्गोऽन्तपाठ समीचीन ।
(६) यद्विद्यादिति क॰ ग॰ घ॰ ।
(७) कर्म्मभि स्तुत इति क॰ ग॰ घ॰ ।
(८) देवास्तु यच्चेति क॰ ग॰ घ॰ ।
(९) देवैरेवेति क॰ ग॰ घ॰ ।
(१०) भागस्य सूक्तादाविति ख॰ ग॰ ङ॰ पुस्तकान्तरेषु, भागो स्वसूक्तादाविति घ॰ ।
(११) सूक्तेष्वैवौषसेषु वेति ग॰, सूक्तेष्वैवौषसेषु वेति ङ॰ ।

---

(क) ऋ॰ १०, २४, ५ ।

यद्वेतुषप्यनडुहो[१] वोढा दोग्ध्राशुरेव वा ॥५०॥
भागेयः स्तौति चाश्व्यादीन्मित्रादीनन्यसंस्तुतौ[२] ।
यदेभिरिति चैतस्मिन् वैश्वदेवेऽग्निमर्चति ॥५१॥
तदाङ्कुरादावन्ने च प्रायशोऽन्यां स्तुवन्नृषिः[३] ।
प्रातर्योगात्[क][४] प्रधक्वाचा स्तौत्यन्यामपि देवताम् ॥५२॥
यस्यां वदत्यर्थवादान्[५] सा ज्ञेया सूक्तभागिनी ।
यान्तु स्तौति प्रसङ्गेन सा विज्ञेया निपातिनी ॥५३॥
यत्तूर्ध्वं भण्यते[६] चास्मिन् सूक्ते वै[७] सूक्तभागिनी ।
यस्मिन् सर्वांस्तु राजर्षीनृषीन् वापि स्तुवन्नृषिः ॥५४॥
मेधातिथिरगस्त्यश्च[ख] वृहदुक्थो मनुर्गयः[ग] ।
छुजिम्बा[ग] च सुकर्त्तेस्य शार्याती[घ] गोतमो सुमः[८] ॥५५॥

(१) यद्वेतुः सायनश्चाहाविति क॰ पुस्तकान्तरञ्च ।
(२) चान्यसंस्तुताविति क॰ ख॰ ग॰ घ॰ ।
(३) अन्याः स्तुवन्नृषः इति ग॰ ङ॰ पुस्तकान्तरञ्च ।
(४) प्रतियोगादिति ग॰ ङ॰ पुस्तकान्तरञ्च ।
(५) वदन्त्यर्थवादा इति क॰ ग॰ घ॰ ।
(६) न तु भाष्यते इति क॰ ग॰ घ॰ ।
(७) वेति ग॰ ।
(८) चेति ख॰ ङ॰ ।
(९) मानवो यमः इति ख॰ ग॰ ङ॰ पुस्तकान्तरञ्च ।

(क) ऋ॰ १०, ४१, २ । (ख) ऋ॰ ६, २, ८ । (ग) ऋ॰ ५, २८, ११
(घ) ऋ॰ ३, ५१, ७ ।

ऋषीनृषिर्वा स्तौति दध्यङ् सेऽस्मा-
त्मानं वा तेषु यं मन्त्रजन्म[१] ।
तस्मादस्य विसंवदन्ति केचित्
इन्द्राग्नी तस्य तु[२] निपातभाजौ ॥१०॥
उचथ्य[क]बृहस्पती ऋषिपुत्रौ बभूवतुः ।
आसीदुचथ्यभार्या तु ममता नाम भार्गवी ॥११॥
तां यवीयान्[३] बृहस्पतिर्मैथुनायोपचक्रमे ।
शुक्रस्योत्सर्गकाले तु गर्भस्तं प्रत्यषेधत[४] ॥१२॥
इहास्मि पूर्वसम्भूतो न कार्यः शुक्रसङ्करः ।
तच्छुक्रप्रतिषेधं तु न ममर्ष बृहस्पतिः[५] ॥१३॥
स व्याजहार तं गर्भं तमस्ते दीर्घमस्त्विति ।
स च दीर्घतमा नाम बभूवर्षिरुचथ्यजः ॥१४॥
स जातोऽप्यतप[६]ल्लोकानेतस्मा[७]दन्धतां गतः ।

(१) यथापन्नाय कौति प्रश्नस्य मन्मेति क० ख० ग० । यथापन्नाय इत्यत्र यद्दमेवापन्नायाः इति अ० ।
(२) केचिदैन्द्रो त्वेवेति क० ख० ग० ।
(३) कनीयानिति क० ख० ग० ।
(४) प्रत्यभाषतेति क० अ० ख० ग० ।
(५) तं शुक्रप्रतिष्ठाम तु बृहस्पतिरमर्षयदिति ग० ।
(६) अप्यतपदिति ख० घ०, अन्धवददिति अ० ख० पुस्तकान्तरेषु ।
(७) तस्मादिति ख० अ० ग० ।



(क) ऋ० ८, ४६, २८ ।



मैत्रावरुणं सुसुमे[क]ति सूक्तं[१]
प्रप्र[ख]पौष्णं वैश्वदेवं द्वितीयं[२] ।
एतत्सूक्तं[३] वैश्वदेवं तृतीयं
वैश्वदेवं स्या[४]द्बहुदेवतेषु ॥७॥
बहुप्रस्तु वैश्वदेवेषु सस्तवः[५]
अर्धर्चा[६] द्वैपदास्त्रैपदाश्च ।
द्विप्रधाना अपि चैकप्रधाना
बहुप्रधाना अपि वैश्वदेवाः[७] ॥८॥
वैश्वदेवी मित्रावरुणी द्वितीया
तिस्रोऽश्विभ्यां तत ऐन्द्री ततोऽग्नेः ।
मारुत्येका तत ऐन्द्राग्न्यनन्तरा
बार्हस्पत्या चोत्तमा स्तौति देवान् ॥९॥

(१) सुसुमेतीद सूक्तमिति ख०, ग० ङ० पुस्तकान्तरञ्च ।
(२) तृतीयमिति क० ख० च० ।
(३) एतत् सौयदिति ग० ।
(४) वैश्वदेव हि स्यादिति ङ० ।
(५) सस्तुव इति क० ख० च० ।
(६) अर्धर्चाविति क० ख० च० ।
(७) अपि ता वैश्वदेव्यः इति ख० पुस्तकान्तरञ्च ।

(क) ऋ० १, १३७, ८ । (ख) ऋ० १, ३०, ७ ।

जीर्णन्तु दीर्घतमसं खिन्नास्तत्परिचारिणः[1] ।
दासा अथ[2] नदीतोये दृष्टिहीनमुपादधुः[3] ॥२१॥
तत्रैकस्त्रैतनो[4][क] नाम शस्त्रेणैनमपाहनत् ।
शिरस्त्वंसावुरश्चैव स्वयमेव न्यकृन्तत[5] ॥२२॥
अङ्गदेशसमीपे तु नद्यः सर्वाः समुत्खिदन्[6] ।
[7]जनयामास चोत्थाय[8] कक्षीवत्प्रमुखानृषीन् ॥२३॥

---

(१) तत्परिचारका इति ख० ङ० पुस्तकान्तरे च ।
(२) दासा बध्वेति क० घ० च० ।
(३) अवादधुरिति क० घ० च० ।
(४) त्रैतन इति क० घ० च० ।
(५) ख० ङ० पुस्तकयोः पुस्तकान्तरे च,—
　　हत्वा दीर्घतमास्तु पापेन महता वृतम् ।
　　आत्माङ्गान्यनुरश्चैव ततोऽप्यन्मोहितो भ्रमम् ॥
　इत्यधिकं पठितम् ।
(६) तं नद्यं समुदक्षिपदिति ङ० पुस्तकान्तरे च ।
(७) जनयामास चोत्थायेति श्लोकार्द्धात्प्राक्, ख० ङ० पुस्तकयोः पुस्तकान्तरे च,—
　　अङ्गराजस्य युक्ता सुदेष्णा पुत्रकाम्यया ।
　　राज्ञा च प्रहिता दासी भर्त्रा मत्वा महातपा ॥
　इत्यधिकं पठितम् ।
(८) सोऽजीजनदृषस्त्वैकादिति ख० ङ० पुस्तकान्तरे च ।

---

(क) ऋ० १,१५८,५ ।

ददुर्देवा सुता नेमे ततोऽन्यो बभूव च[1] ॥१५॥
स वेदिषद् इत्यस्तौ[2] चतुर्भिर्जातवेदसं ।
समिद्ध आप्रियोऽन्त्यैन्द्री तमित्यग्नेः पराणि षट्[3] ॥१६॥
स्तुतौ तु मित्रावरुणौ सूक्तैर्मित्रमिति त्रिभिः ।
मित्रं मैत्री वदत्येना[4] माधेनवस्य शंसति ॥१७॥
अदितिं चाथ वाप्यग्निं तथा रूपं हि दृश्यते ।
अग्निं मेने दितिं त्वेव कुत्से चेह[5] च शौनकः ॥१८॥
ऋषिरत्र प्रसङ्गाद्वा दर्शनादानुकीर्तयेत्[6] ।
विष्णोर्नुकमिति त्रीणि वैष्णवानि पराण्यतः ॥१९॥
सवः पान्तं चतुर्भिस्तु[7] इन्द्राविष्णू सह स्तुतौ ।
सूक्तानि वा वैष्णवानि ऋषिस्त्वेत्यृचि[8] कांक्षति ॥२०॥

---

(१) तु वक्ष्यामो नेमे न लभ्यता गत इति क॰ ख॰ ग॰ ।

(२) इत्यारैदिति ख॰ ।

(३) आपः परैन्द्री चतुर्भिः स्वपिं तमित्यत इति क॰ ख॰ घ॰, आप्रियोऽन्त्यैन्द्री मासाज्ञापे पराणि षेति ग॰ ।

(४) मैत्रीह देवेतामिति ख॰ ।

(५) मारुतः कुत्से चेवेति ग॰ पुस्तकान्तरञ्च ।

(६) ऋषिरर्थैः प्रसङ्गाद्वृत्वाद्योतन्त्रकीर्त्तयदिति ख॰ ।

(७) इन्द्रस्त्रथमिषन्मितिरिति ग॰, तथा चतुर्भिर्भिर्मितिरिति घ॰ पुस्तकान्तरञ्च ।

(८) मातामित्रजीति ग॰ ख॰ पुस्तकान्तरञ्च ।

जीर्णन्तु दीर्घतमसं विप्रास्तत्परिचारिणः[१] ।
दासा अथ[२] नदीतोये दृष्टिहीनमुपादधुः[३] ॥२१॥
तत्रैकस्त्रैतनो[४](क) नाम शस्त्रेणैनमपाहनत् ।
शिरश्चांसावुरश्चैव स्वयमेव न्यकृन्तत[५] ॥२२॥
अङ्गदेशसमीपे तु नद्यः सर्वाः समुत्क्षिदन्[६] ।
[७]जनयामास चोत्थाय[८] कक्षीवत्प्रमुखानृषीन् ॥२३॥

---

(१) तत्परिचारका इति ख० ङ० पुस्तकान्तरञ्च ।
(२) दासा बध्वेति क० ग० घ० ।
(३) अवादधुरिति क० ग० घ० ।
(४) त्रैतनः इति क० ग० घ० ।
(५) ख० ङ० पुस्तकयोः पुस्तकान्तरे च,—
हत्वा दीर्घतमास्तं तु पापेन महता वृतम् ।
आत्मनाङ्गान्यशुरश्चैव ततोऽदाम्नोहितो भ्रमम् ॥
इत्यधिकं पठितम् ।
(६) तं स्रवं समुदक्षिपदिति ङ० पुस्तकान्तरञ्च ।
(७) जनयामास चोत्थायेति श्लोकार्द्धात्प्राक्, ख० ङ० पुस्तकयोः पुस्त-
कान्तरे च,—
अङ्गराजमहिषे युक्ता सुप्रिजं पुत्रकाम्यया ।
राज्ञा च प्रहिता दासी भक्ता मत्वा महातपा ॥
इत्यधिकं पठितम् ।
(८) सोऽभीजनद्दासैकादिति ख० ङ० पुस्तकान्तरञ्च ।

---

(क) ऋ० १,।१५८, ५ ।

तुष्टाव चैव सूक्ताभ्या[1]मनोधीत्यश्विनावृषि ।
प्रेति द्यावापृथिव्यौ तु[2] पराभ्यामेतदुत्तर ॥२४॥
किमार्भेव पर[3] मानो मेध्यस्यास्य संस्तव ।
इमां[क]ता स इति त्वष्टां नीयमान प्रशंसति ॥२५॥
स्तूप्यास्तास्य चैवाच यत्र संस्तुता त्वया ।
नियुक्तायानियुक्ताश्च प्रसङ्गादनुकीर्त्तिता. ॥२६॥
षडश्वपदमश्वस्य हविष्य[ख] चाह सूनव[4] ।
तस्मिन्मांसस्य सूनस्य चतुर्धा हविषस्तथा[5] ॥२७॥
वासोऽधिवाससोश्चाथ स्वधिते[ग]श्च प्रकीर्त्तनम्[6] ।
ग्रावशूलस्थूणानां[घ]श्च[7] स्वधितेश्च प्रकीर्त्तनम्[8] ॥२८॥

---

(१) चेति सूक्ताभ्यामिति ङ० पुस्तकान्तरे च ।
(२) द्यावापृथिव्यावेति ङ० पुस्तकान्तरे च ।
(३) परे इति ङ० पुस्तकान्तरे च ।
(४) भविष्य चाह भूतवत इति ख० ङ० पुस्तकान्तरे च ।
(५) चतुर्धा हविषस्तथेति ग०, तस्मिंश्च मांसस्य चतुर्धा च विधा स्तथेति ङ० पुस्तकान्तरे च ।
(६) यदिमस्याश्व कीर्त्तनमिति ख० ग०, वासोधिवाससोश्चाथ यज्ञीयस्य च कीर्त्तनमिति ङ० ।
(७) ग्रावस्थूणस्थूणायाश्चेति ख० ङ० ।
(८) क० घ० च० चिह्नितपुस्तकेषु, ग्रावस्थूणस्थूणानाञ्चेतिश्लोकार्द्धं न पठितम् ।

---

(क) ऋ० ७, २७, २ । (ख) ऋ० १, १६२, ४ । (ग) ऋ० १, १६२, १८ । (घ) ऋ० ५, ६२, ७ ।

भागस्य(१) कीर्त्तनं चात्र इन्द्रापूष्णोः सह स्तुतिः(२) ।
सूक्तं यदस्य(३) वामीयं वैश्वदेवं तदुच्यते ॥२९॥
प्रवादा विविधास्तत्र देवानां चात्र कीर्त्तनं ।
अग्निस्तु वामः पलितो(क) वायुर्भ्राता तु मध्यमः ॥३०॥
घृतपृष्ठ(ख)स्तृतीयोऽत्र(४) सप्त वै रश्मयस्तु ताः ।
परांस्तु कश्यपमग्निं(५) यथा वर्षति पाति(६) च ॥३१॥
अहोरात्रदिना(७)न्मासानृतूंश्च परिवर्त्तनं(८) ।
पञ्चधा त्रिविधा(९) चैव षोढा द्वादशधैव च(१०) ॥३२॥
संवत्सरं चक्रवच्च पराभिः कीर्त्तयत्यृषिः ।

---

(१) भागस्येति ग० घ०
(२) इन्द्रापूष्णोश्च कीर्त्तनमिति ख० ग० ।
(३) यदस्येति ङ० ।
(४) तृतीयोऽस्य इति घ० ।
(५) अग्निरिति घ० ।
(६) पातीति ख० घ० ।
(७) अहोरात्रान् दिनानिति ङ० ।
(८) मासांश्च परिकीर्त्तनमिति घ० ।
(९) पञ्चधा च त्रिधेति ख० ङ० ।
(१०) द्वादशधापि चेति घ० ।

---

(क) ऋ० १, १६४, ४ । (ख) ऋ० १, १६४, १ ।

क्षेत्रज्ञानं(१) च धेनुञ्च गौरीं वाचं सरस्वतीं ॥२३॥
धर्म्मं पूर्व्वयुगीयञ्च(२) साध्यान् देवगणांस्तथा ।
विविधानि च कर्म्माणि त्वग्निवायुविवस्वताम् ॥२४॥
विभूतिमग्नेर्वायोश्च जगती स्थान(३)सङ्क्रमे ।
हरणं रश्मिभिश्चैव(४) विसर्गं(५) पुनरेव च ॥२५॥
कथानुकीर्त्तनञ्चाप(६) पर्जन्याग्निविवस्वतां ।
मातापुत्रौ तु वाक्प्राणौ माता वागितरः सुतः ॥२६॥
सरस्वन्तमिति प्राणा(७) वाचं प्राहुः सरस्वतीं ।
शरीरमिन्द्रियैर्युक्तं क्षेत्रमित्यभिधीयते ॥२७॥
वेद तत्त्वाच(८) एवैतस्मात् क्षेत्रज्ञ उच्यते ।
मेघः(९) शक(क) स्तस्य धूमः(१०) सलिलं वायु एव वा ॥२८॥

---

(१) क्षेत्रज्ञानमिति म०, क्षेत्रं ज्ञानमिति ङ० ।
(२) पूर्व्वयुगानाञ्चेति ख० ग०, धर्म्मपूर्व्वयुगौ चेति म०,
(३) जगति स्थास्विति ख० ङ० ।
(४) वाहः इति ख०, वाहामिति ङ० ।
(५) विसर्पमिति ख० ।
(६) चाप्येति ख० ङ० पुस्तकान्तरयोः ।
(७) प्राणः इति क० ग० घ० च० ।
(८) वेत्यैतस्माच्च इति ङ० ।
(९) मेघे इति ख० ।
(१०) धूमे इति ख० ।

---

(क) ऋ० ८, ८०, ३ ।

सोम उक्ता[क]भवन्त्यस्य पावकाश्च त्रयोऽधिपाः ।
गौरीरं तं वैश्वदेवमुपरि स्यात्पृथक् स्तुतिः ॥३९॥
इन्द्रं मित्रमिमौ सौर्य्यौ सौरी चान्या सरस्वते[1] ।
मारुतेन्द्रस्तु संवादः कयेति[2] परमः स्मृतः[3] ॥४०॥
मरुतामयुज[4]स्त्वैन्द्र्यो युग्माः सर्व्वाः[5] सहान्यया ।
एकादशी प्रथमा च मारुतस्तृच उत्तमः[6] ॥४१॥
वृषस्येव तु तत्रोक्तं कर्त्तृत्वमितरस्य तु ।
इतिहासं पुरावृत्तमृषिभिः परिकथ्यते[7] ॥४२॥
समागच्छन्मरुद्भिस्तु[8] चरन् व्योम्नि शतक्रतुः ।

---

(१) क० ख० ग० घ० पुस्तकेषु, मेघः प्रकृतस्य धूम इत्यादि चौरी चान्या सरस्वते इत्यन्तपाठो न विद्यते, तेषु च अत्र स्थले,—
सूक्तमन्त्यमथैवं लिलङ्ग्यानमेव प्रशंसति ।
प्रवादकङ्कलाश्च ततः सलिलमुच्यते ॥
इति पाठो वर्त्तते ।
(२) कथेतीति ख० ।
(३) ततः इति ख० ङ० ।
(४) मरुतः इति ङ० ।
(५) सर्व्वेति ङ० ।
(६) उत्तरः इति ग०, मारुत्यन्तिम उत्तरा इति ङ० पुस्तकान्तरे च ।
(७) वृषस्यैव तु तत्रोक्तमित्यादि ऋषिभिः परिकथ्यते इत्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु नेष्यते ।
(८) चेति ख० ङ० ।

(क) ऋ० १, १०६, १ ।

बुद्धा तुष्टाव तानिन्द्रस्तेनेन्द्र[१]मृषयोऽब्रुवन् ॥४३॥
तेषामगस्त्य स्वाद् तपसा वेद[२]लक्षत ।
स तानभिजगामाशु निरुध्येन्द्र हविस्तदा ॥४४॥
मरुतश्चाभितुष्टाव सूक्तैस्तदिति च[३] त्रिभिः[४] ।
महश्चिदिति चैवेन्द्र सद्यस्कमिति चैतया[५] ॥४५॥
निरुप्तं तद्धविरिन्द्र मरुद्भ्यो दातुमिच्छति[६] ।
विज्ञायावेक्ष्य तद्रूप्य त्विन्द्रो[७] नेति तमब्रवीत्[८] ॥४६॥
न श्वो नाद्यतन ह्यस्ति वेद कस्तद्यदद्भुत ।
कस्यचित्तस्य सञ्चारे[९] चित्तमेव विनश्यति ॥४७॥
किं न इत्यब्रवीदिन्द्रमगस्त्यो भ्रातरस्तव ।
मरुद्भिः सम्प्रकल्पस्व[१०]वधीर्मा च[११] शतक्रतो ।४८॥

---

(१) ते चैन्द्रमिति ख० ग० छ० पुस्तकान्तरेषु ।
(२) तपसावेधीति ख० छ० पुस्तकान्तरेषु ।
(३) तच्चिति लिति ख० घ० च० ।
(४) त्रिभिरिति पञ्चभिरिति ग० ।
(५) महश्चिदित्यनेनैन्द्र सद्यस्क त सद्याव्यमिति ख० छ० पुस्तकान्तरेषु ।
(६) इच्छयेति ख०, इच्छतः इति छ० पुस्तकान्तरेषु ।
(७) तद्भावमिन्द्र इति ख० छ० पुस्तकान्तरेषु ।
(८) ततोऽब्रवीदिति ख० छ० पुस्तकान्तरेषु ।
(९) तर्पसञ्चारे इति [illegible]० छ० पुस्तकान्तरेषु ।
(१०) सम्प्रकल्पस्वेति ख० छ० ।
(११) मा नः इति ख० छ० पुस्तकान्तरेषु ।

किं नो भ्रातरिति त्वयामिन्द्रो मान्यमुपालभत् ।
अगस्त्यस्त्वरमित्यथा चुभ्य[1]मिन्द्र प्रयामयत्[2] ॥४८॥
प्रादात्सवनन[3] कृत्वा तेभ्य एव च तद्धविः ।
पूर्व्वया मान्वयन्मिन्द्रो ह्यगस्त्य स्तेहकाम्यया ॥५०॥
एव सवनन कृत्वा प्रादात्तेभ्य स तद्धवि[4] ।
सुते[5] चकार सोमे च[6] तानिन्द्र. सोमपीथिन[क] ॥५१॥
तस्मादिद्यान्निपातेन[7] ऐन्द्रेषु[8] मरुतस्तु तान्[9] ।
प्रीतात्मा पुनरेवर्षिस्तास्तुष्टाव पुन पृथक्[10] ॥५२॥
मरुतः प्रेति सूक्ताभ्या[11] मिन्द्र षड्भि. परैस्तु स[12] ।

---

(१) कुद्धमिति ख० ङ० पुस्तकान्तरञ्च ।

(२) प्रसादयदिति ख० ङ० प्रसाधयदिति पुस्तकान्तरम् ।

(३) सङ्गमनमिति क० ग० घ० च० ।

(४) पूर्व्वया मान्वयन्मिन्द्र इत्यादि स तद्धविरित्यन्तपाठ, क० घ० च० चिह्नितपुस्तकेषु न दृश्यते ।

(५) सुते इति ग० ।

(६) सोमेऽपीति ख० ङ० पुस्तकान्तरञ्च ।

(७) निपातेष्विति ङ० पुस्तकान्तरञ्च ।

(८) मन्त्रेष्विति ख० ।

(९) मरुत स्तुता इति ङ० पुस्तकान्तरञ्च ।

(१०) पृथक् पृथगिति ख० ङ० पुस्तकान्तरञ्च ।

(११) प्रतिसूक्ताभ्यामिति ख० ङ० पुस्तकान्तरञ्च ।

(१२) गायन् षड्भि प्रभीपतिरिति ख० ङ० पुस्तकान्तरञ्च ।

---

(क) ऋ० १०, १६, ८ ।

ऋतुस्नाता(१) ऋषिर्भार्या लोपामुद्रा यशस्विनी ॥५३॥
उपजल्पितुमारेभे रहः संयोगकाम्यया ।
ताभ्यां सा ब्रवीदृग्भ्यां पूर्वीरिति चिकीर्षितं ॥५४॥
रिरंसुस्तामथागस्त्य उत्तराभ्यामतोषयत् ।
विदित्वा तपसा सर्व तयोर्भाव रिरंसतो ॥५५॥
उक्तेन(२) कृतवानस्मिन्(३) ब्रह्मचार्यन्तमे जगौ ।
मग्रस्य(४) न परिस्वज्य गुरू मूर्ध्न्यवजिघ्रत ॥५६॥
क्लिन्नमाचतुरोभावनागा ऋषि(५) पृथक् ।
पुरो(क)रजांसीति तत सूक्ते पञ्चभिरश्विनौ ॥५७॥
अगस्त्य एव तुष्टाव सूक्तेन कतरे स्तुत(६) ।
द्यावापृथिव्यौ सूक्तेन आनो विश्वान् दिवौकस ॥५८॥
पितु(ख)मन्त्र समिद्धाग्न्यो अग्निमग्ने नयेति च(७) ।
बृहस्पतेरनर्वाण(ग) ककतोपनिषत्पर(८) ॥५९॥
अपा तृणाना सूर्यस्य केचिदेता स्तुति विदु ।

(१) ऋतौ स्नातामिति क० ख० घ० ।
(२) न स्तेनः इति ख० ग०, मत्स्येतदि ख० पुस्तकान्तरे च ।
(३) चक्रौति ख० ग० घ० ।
(४) मग्रस्येति ग० ङ० ।
(५) चोभौ ह्यनागोऽस्तीतीति क० ग० घ० ङ० ।
(६) कतरेति यरेथ लिवि क० ख० घ०, सूक्तेन कतरेति लि ङ० ।
(७) समिद्धो ह्यग्नियोऽग्ने च नयामये इति ख० ग० पुस्तकान्तरे च ।
(८) परति ख० ङ० पुस्तकान्तरे च ।

(क) ऋ० १, ३४, १ । (ख) ऋ० १, ६१, ७ । (ग) ऋ० १, १०, १ ।

ददर्श तद्गतस्त्वो वा(१) विषमं विषमंकया ॥६०॥
अदृष्टास्यो विश्वरूपः(२) सूक्तस्यांशोऽत्र तु त्र्यृचः(३) ।
अस्तौ(४)त्कृत्स्नमदोऽग्निं त्वं(५) जातवेदस(६)माप्रियः ॥६१॥
यज्ञेनाथ समिद्धोऽग्निरतोऽग्निं(७) मन्त्रभिर्जुवे(क) ।
संयुज्य(८) तपसात्मानमैन्द्रं बिभ्रन्महद्वपुः ॥६२॥
अदृश्यत मुहूर्त्तेन दिवि च व्योम्नि चेह च ।
तमिन्द्रमिति मत्वा तु(९) दैत्यौ भीमपराक्रमौ ॥६३॥
धुनिश्च चुमुरिश्चैव(१०) सायुधावभिपेततुः ।
विदित्वा स तयोर्भावमृषिः(११) पापचिकीर्षतोः ॥६४॥
यो जात इति सूक्तेन कर्माण्यैन्द्राण्यकीर्त्तयत् ।

---

(१) त्विति ख० ङ० पुस्तकान्तरञ्च ।
(२) अदृष्टाख्यो नष्टरूपः इति ख० घ० पुस्तकान्तरञ्च ।
(३) तृचः इति ग० ।
(४) स्तौतीति ङ० पुस्तकान्तरञ्च ।
(५) अग्नित्वमिति ग० ङ० ।
(६) जातवेदस्त्वमिति ख० ग० ।
(७) भातोऽग्निमिति क० ग० घ०, समिद्धिरिति ङ० ।
(८) संयोज्येति ख० ङ० पुस्तकान्तरञ्च ।
(९) तौ इति ङ० ।
(१०) चोभाविति ख० ङ० पुस्तकान्तरञ्च ।
(११) तृषिरिति क० ग० घ० ।

---

(क) ऋ० १, १०, ७ ।

उक्तेषु(१) कर्मस्विन्द्रेषु भीतावाविश्य विवेश ह(२) ॥६५॥
इदमन्तरमित्युक्त्वा ताविन्द्रस्तु न्यवर्हयत् ।
निहत्य तौ गृत्समदमृषि(३) शक्रोऽभ्यभाषत ॥६६॥
यथेष्ट मास(४)स्वे पश्य प्रियस्त्व(५) ह्यागतोऽसि(६) मे ।
वरं गृहाण मत्तस्त्वमक्षय(७) चास्तु ते तप ॥६७॥
प्रज्ञ(८)श्च प्रत्युवाचर्षिरस्माकं वदतां वर(९) ।
तनूनामस्तु चारिष्टिर्वाक्चास्तु हृदयङ्गमा ॥६८॥
सुवीरा(क)रयिमन्त(ख)श्च वयन्त्वामिन्द्र धीमहि(१०) ।
इन्द्र(११)त्वाञ्च विजानीमो वय कश्मनि(१२) जन्मनि ॥६९॥

---

(१) कीर्त्तिष्विति क० घ० च० ।
(२) भीतौ सुषुपतुस्तदेति ख० ग० पुस्तकान्तरञ्च ।
(३) इदमिति ग० पुस्तकान्तरञ्च ।
(४) मांसमिति पाठ सङ्गत ।
(५) मास स्वे पश्य प्रियस्त्वमिति क० घ० च० । अत्र, मास स्वे पश्यं प्रियस्त्वमिति पाठो विशुद्धः ।
(६) प्रियस्य चागतोऽस्मीति ग० ।
(७) मत्तश्चाक्षयमिति क० घ० च० ।
(८) प्रज्ञा इति क० घ० च० ।
(९) वरेति क० ग० घ० च० ।
(१०) [illegible]न्द्र वामहे इति ख०, इन्द्रमीमहे इति ग० ।
(११) इन्द्रमिति ग० ।
(१२) श्मनीति क० ग० घ० च० ।

---

(क) ऋ० ६, १९, ५ । (ख) ऋ० १०, ७४, १ ।

लब्धत[1]येष मे भावो मापगाम्लद्रथीतरः[2]।
निरुक्तं तदिदं चार्षमिन्द्रश्चैषान्यवाग्यया ॥७०॥
यमे वरमिदं सर्व्वं तदाकर्ण्य शचीपतिः[3]।
तथेत्युक्ता तुराषाट् त्वां[4] पाणौ जग्राह दक्षिणे ॥७१॥
ऋषियास्य सखित्वेन पाणिना पाणिमस्पृशत्।
सहितौ जग्मतुश्चैवं महेन्द्रसदनं[5] प्रति ॥७२॥
तत्रैनमार्द्दयत्प्रीत्या स्वयमेव पुरन्दरः।
कर्म्मणा विधिदृष्टेन तस्यर्षिर्वाभ्यपूजयत्[6] ॥७३॥
सखित्वाच पुनस्तेन[7]मुवाच हरिवाहनः।
त्वष्ट्माद्यये यस्मात्त्वमस्मानृषिसत्तम ॥७४॥
तस्माद्दयालमद्यो नाम शौनकोत्तो[8] भविष्यसि।
ततो द्वादशभिः सूक्तैस्तुष्टावेन्द्रं सुधी[9](क)त्युषिः ॥७५॥

---

(१) त्वा तत इति क॰ घ॰ च॰।
(२) मापगाच रथीतरः इति ख॰ पुस्तकान्तरञ्च।
(३) निरुक्तं तदिदं चार्षमित्यादि तदाकर्ण्य शचीपतिरित्यन्तपाठः, ख॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु, नोपलभ्यते।
(४) त्वामित्यत्र तमितिपाठः युक्तः। त्याद्वन्विति ख॰ घ॰ पुस्तकान्तरञ्च।
(५) महेन्द्रभवनमिति ख॰ घ॰ पुस्तकान्तरञ्च।
(६) वाभ्यपूजयदिति क॰। तस्यर्षिं चाभ्यपूजयदिति ख॰ ग॰ घ॰ च॰।
(७) स्तवमिति पुस्तकान्तरम्।
(८) शौनकोऽत्र इति ख॰।
(९) इन्द्रसुधीर्त्युषिरिति क॰ पुस्तकान्तरञ्च।

---

(क) ऋ॰ १, २५, १९।

ददर्श संस्तुवन्नेव तत्र स ब्रह्मणस्पतिम् ।
बृहस्पतिं तु तुष्टाव बृहल्लिङ्गाभिरेव च[1] ॥७६॥
स तमभ्यभितुष्टाव[2] चतुर्भिरत[3] उत्तरैः ।
गणानां विश्वमित्यस्यां[4] सहेन्द्राब्रह्मणस्पती ॥७७॥
बृहस्पतिं प्रयन्नादा[5] ब्रह्मणस्पतिमेव च[6] ।
तुष्टाव कर्मणैकेन प्रभावस्यान्तरन्तयोः[7] ॥७८॥
मित्रावरुणदक्षामतुविजात[क]भगार्य्यमणाम्[8] ।
आदित्यानामिमाः [9]सूक्तमिदं वारुणमुच्यते[10] ॥७९॥

---

(१) बृहस्पतिन्तु तुष्टाव इति लिङ्गस्तवैः सहेति ख०, बृहल्लिङ्गस्तवैः सहेति ड०।
(२) अभ्यभितुष्टावेति क० ख० ग० पुस्तकान्तरञ्च।
(३) चतुर्भिरिति उत्तरैरिति ग०, चतुर्भिरित उत्तरैरिति ड०, चतुर्भिरेव उत्तरैरिति पुस्तकान्तरम्।
(४) अस्या इति ख०, विश्वामित्रस्येति ख०।
(५) प्रयन्नत्वादिति ख० ट०।
(६) ब्रह्मणस्पतिमेव वेति ट०।
(७) इयोरिति ग०। श्लोकार्द्धमेतत् ख० घ० चिह्नितपुस्तकयोर्नोपलभ्यते।
(८) तुविजातभगार्यमामिति ख०।
(९) इमाप्युक्तमिति ख०। इमाः इत्यत्र इदमिति पाठो विशुद्धः।
(१०) वरुणमिति ग०।

---

(क) ऋ० १, १३१, ७।

(१)घृतवता वैश्वदेवम्तमैन्द्रं परन्तु यत्(२) ।
प्रहि क्रतुमिति त्वस्यामिन्द्रासोमौ सह स्तुतौ ॥८०॥
सरस्वति त्वमित्यस्मिंस्तृचे मध्यमा तु वाक्(३) ।
बृहस्पतिन्तु यो नस्तु(४) उत्तमा मरुतस्तुतिः(५) ॥८१॥
अस्माकं वैश्वदेवन्तु सूक्तादावुत्तमस्य तु(६) ।
द्यावापृथिव्योर्द्वे त्वाष्ट्रौ(७) तथैवैन्द्रौ(८) परे ततः ॥८२॥
द्वे द्वे राकासिनीवाल्योः षड्लैङ्ग्योऽग्न्यास्तथान्तया(९) ।
(१०)रौद्रं मारुतन्तु पर(११)मा ते धारावरा इति ॥८३॥

---

(१) वायव्यीयो म इत्याद्या तु स्वप्नाद्यप्रयाभिनी । श्लोकार्द्धमेतद् ग॰ चिह्नितपुस्तके घृतवतेति श्लोकात् पूर्व्वमधिकं पठितं ।
(२) परं यत इति ख॰, पर तत इति ङ॰ ।
(३) माध्यमानुवागिति ख॰ ।
(४) बृहस्पते सुतियों मा इति ख॰, यो न स्त इति ग॰ ।
(५) बृहस्पते स्तुतियों उ त्वमृक्श्वषता स्तुति इति ङ॰ ।
(६) अस्माक वैश्वदेव स्यात् सूक्तादावस्य चास्य ऋगिति ग॰, स्यादया ऋत् चान्तिमास्य त्विति ङ॰ पुस्तकान्तरञ्च ।
(७) ऋगाद्यावापृथिवीत्युचेति क॰ घ॰ च॰, द्यावापृथिव्योस्त्वाष्ट्रौ वै इति ख॰ । वै इत्यत्र वा इति ग॰ ।
(८) वाथ चैन्द्र्या इति ग॰, चैन्द्रौ वर्षौ इति ङ॰ पुस्तकान्तरञ्च ।
(९) तथान्त्ययेति ग॰, बहुभुगृवाधन्तया स्तुता इति क॰ घ॰ च॰ ।
(१०) ख॰ ङ॰ चिह्नितपुस्तकयोः पुस्तकान्तरे च रौद्रमित्यस्मात् पूर्व्वं, तत्पूर्व्वे द्वे ऋचौ कुह्वा कुहूमहमिति स्तुते । तदुत्तरे द्वे चानुमतेरनुमो न्विति ते स्तुते । धातुर्यस्तस्यादौ धाता ददाति नो रयिम्(क) । इत्यधिकं पठितं ।
(११) रौद्रं स्यात् परमारुतमिति पुस्तकान्तरम् ।

---

(क) ऋ॰ १, १, १ ।

ऋषेर्जिगमिषोरार्गां ववाग्रा(क)स्ताय(१) दक्षिणाम्।
स तमार्येण सम्प्रेच्य चचुषा यविह्वयिषम्।
पराभ्यामभितुष्टाव सूक्ताभ्यान्तु कनिक्रदत्(ख) ॥८८॥

प्रशास्य गायंस्तपसाऽभ्यगच्छ(२)-
द्रुह्मर्पितामेक्रमतश्च पुत्रान्।
स गाधिपुत्रस्तु जगाद सूक्तं
सोमस्य मेत्याग्नेयं यत्परञ्च(३) ॥८९॥

वैश्वानरीयेति(४) समित्समिद्रा
मोदे आग्नेये(५) चत्तरे त्व(६) सूक्ते।
द्यावापृथिव्यौ तु निपातभाजा(७)
वापोऽथ देवाः पितरश्च मित्रः(८) ॥९०॥

आग्नेयेषु दृश्यन्ते सुतास्तु(९)-

(१) ववासे प्रतीति ख० ङ० पुस्तकान्तरयः।

(२) अभ्यगच्छदिति ङ० पुस्तकान्तरय।

(३) नेत्यग्ने तत्परे चेति ख० ङ० पुस्तकान्तरयः।

(४) वैश्वानरीयेऽथेति ख० ङ० पुस्तकान्तरयः।

(५) प्रियो हे चेति ख० ङ० पुस्तकान्तरयः।

(६) त्वस्येति ख० ङ० पुस्तकान्तरयः। उत्तरेत्यचेति ग०।

(७) द्यावा पृथिव्या उभयो निपाता इति ख० ग० ङ० पुस्तकान्तरयः।

(८) आपोऽथ देवा पितरोऽथ मित्र इति ख० ग० ङ० पुस्तकान्तरयः।

(९) क० घ० च० चिह्नितपुस्तकेषु सुतास्तु इत्यत्र तु इति पाठो न दृश्यते।

(क) ऋ० ३, २, २। (ख) ऋ० १, १२८, १।

वैश्वानरो वरुणो जातवेदाः।
स्तूयेतैका यत्र यथास्तुतिर्वा[१]
नैपात्यांस्तां[२]श्चोपमार्थांश्च[३] विद्वान् ॥८१॥
राजर्षयो गृत्समदो वसिष्ठो
भरद्वाजः कुशिको गौतमश्च।
विश्वेऽश्विनावङ्गिरसोऽत्र योऽदिति-
र्भौमाः कण्वो[४] भृगवो रोदसी दिशः ॥८२॥
सावित्रसौम्याश्विन[५]मारुतेषु
ऐन्द्राग्नेये रौद्रसौर्य्यौषसेषु[६]।
आद्यावन्ते सूक्तमध्ये स्तुतास्तु[७]
न व्याप्नन्ति देवताः सूक्तभाजः[८] ॥८३॥
भ्रमेः सप्तदशोऽध्याय ऊर्द्धं जुषस्व जातये[क]।

---

(१) स्तुतो यत्र यथान्यस्तुतिर्वेति ख० ग० पुस्तकान्तरञ्च।
(२) निपातार्थाः इति क० ग० घ० च०।
(३) उपमार्थांश्चेति पाठः साधुः।
(४) कण्वा इति ख० ग० पुस्तकान्तरञ्च।
(५) सौम्याश्विनेति ख० ग० पुस्तकान्तरञ्च।
(६) सौर्य्यौषसेष्विति ख० ग० पुस्तकान्तरञ्च, चैत्रिसैष्विति च०।
(७) स्तुताश्च इति ख० पुस्तकान्तरञ्च।
(८) प्रश्ने देवता सूक्तभाजिनोमिति पुस्तकान्तरम्, सूक्तभाजा इति क०, सूक्तभाजिनामिति ग०।

---

(क) ऋ० ६, ३, १।

एते काण्व्यावृचौ यौप्यौ छन्दन्ति लेति पञ्च च[1] ॥९४॥
ग्रैषा वज्रभ्यो यूपेभ्यो[2] वैश्वदेवी त्वृगष्टमी[3] ।
अंस्या[क]न्या प्रश्विनी योक्ता[4] षष्ठमैन्द्राग्न[5]मुच्यते ॥९५॥
वैश्वदेव्यग्निसुपर्ण[6] दधिक्राव्णेति[7] चैतया ।
आग्नेन्द्री त्वम इन्द्रेति परा[8] वैश्वानरस्तृचः ॥९६॥
प्रयन्तु मारुता[9]स्यान्त्या प्रतधारश्रुरुस्तवः ।
प्र वो वाजा ऋतून्[10] स्तौति ऋत्विजः स्तौति[11]मन्यतः॥९७॥
पुरीष्याश्च[12] [ख]इति त्वग्नान्धिष्ण्यानग्नीन् प्रशंसति ।

---

(१) एते काण्व्यावृचौ चोभौ यौप्यौ छन्दन्ति पञ्च चेति ख० ।
(२) ग्रैषेभ्यो वज्रयूपेभ्य इति ग० ।
(३) वैश्वदेवी ऋगष्टमीति क०, वैश्वदेवीत्यृगष्टमीति पुस्तकान्तरम् ।
(४) स्यान्ता प्रश्विना योक्तेति घ० ।
(५) स्यान्ताः प्रश्विनाः योक्तेन्द्राग्नी ऐन्द्राग्नमिति ङ० पुस्तकान्तरञ्च ।
(६) अग्निसुपर्ण वैश्वदेवीति क० ख० ग० घ० ङ० ।
(७) दधिक्रामितीति क० ग० घ० ङ० ।
(८) अग्नीन्द्री त्वम इन्द्रयन्तूं परेति ङ० पुस्तकान्तरञ्च ।
(९) प्रयन्तमारुतः इति ख० ङ० पुस्तकान्तरञ्च ।
(१०) ऋतूनितिपाठः समीचीनः ।
(११) स्तौति ऋत्विजश्चैवेति ख० ङ० पुस्तकान्तरञ्च ।
(१२) पुरीष्यास इति ग० ।

---

(क) ऋ० १, १९१, ७ । (ख) ऋ० ३, २२, ४ ।

ज्ञेया(1)श्चैव तु होतारस्ते देव्याश्चैव तत्र तु(2) ॥९८॥
अयोविंशतिरैन्द्राग्नी इच्छन्तीति पराक्षतः ।
सूक्ते प्रेति तु नद्यश्च विश्वामित्रं समूदिरे(3) ॥९९॥
(4)पुरोहितः सन्विश्वार्थे सुदासः सोऽहरद्धनम् ।
विपाट्छुतुद्र्योः सम्भेदं शमित्येते उवाच ह ॥१००॥
प्रवादाश्च वृश्चन्ते दिवदश्ववदेकवत् ।
अश्वेत्यर्द्धर्चे पश्चो वा नदीष्वप्येकवन्ति ते ॥१०१॥
आद्ये तृचे दिवत्वार्द्धं विश्वामित्रवचःश्रुतेः ।
एनाभिर्ऋग्भिर्वा नद्य ऋषिं बहुवदूचिरे ॥१०२॥
षष्ठ्यष्टम्यो(5)श्चतुर्थ्याश्च दशम्याश्चेतरा ऋषेः ।
सप्तम्यामृषि षष्ठ्याश्च यौ देवौ(6) परिकीर्त्तितौ ॥१०३॥
निपातिनौ तु तौ ज्ञेयौ लैन्द्रापार्वत्युगुत्तमे(7) ।
करोति पुत्रिकां नारी(8) यथा दुहितरन्तया ॥१०४॥

---

(१) यूपा इति ख० ।
(२) तत्र चेति ख० ग० ।
(३) विश्वामित्रः समूहिरे इति ख० ग० पुस्तकान्तरे, स संवदन्निति ख० ग० च० ।
(४) पुरोहित इत्यादि श्लोकत्रयं ख० ग० ङ० चिह्नितपुस्तकेषु नोपलभ्यते ।
(५) षष्ठ्यष्टम्योरिति पाठः साधुः ।
(६) यौदकौ इति ग० ।
(७) पार्वत्यगृतमेति ङ० पुस्तकान्तरे च ।
(८) नामेति ख० ङ० पुस्तकान्तरे च ।

तस्यां सिञ्चति रेतो वा[1] तच्छाशदिति कीर्तितम् ।
रिक्थस्य दुहितुर्दानं नेत्यृचि प्रतिषिध्यते[2] ॥१०५॥
तस्याश्चैव[3] यवीयांसं भ्रातरं ज्येष्ठवत्सुतं ।
सुदासस्य महायज्ञे दक्षिणा गाधिसूनवे[4] ॥१०६॥
निगृहीतं बलाच्चेतः[5] सोऽवसीददिचेतनः ।
तस्मै[6] ब्राह्मीन्तु सौरीं वा नाम्ना वाचं ससर्परीं ॥१०७॥
सूर्यवेश्मादिहागत्य ददुर्वे[7] जमदग्नयः ।
कुशिकानां ततः सा वागमतिन्तामपाहनत् ॥१०८॥
उपेत्य वाच्या[8] कुशिकान् विश्वामित्रो बुबोध यत् ।
लब्ध्वा वाचं च हृष्टात्मा[9] तानृषीन् प्रत्यपूजयत्[10] ॥१०९॥
ससर्परीरिति द्वाभ्यामृग्भ्यां वाच स्तुवन् स्वयम् ।
स्थिरावित्यनयो[ख]ऽन्यान्यनडुह[11]श्च ग्रहान् व्रजन् ॥११०॥

---

(१) रेतो धा इति ख० पुस्तकान्तरञ्च ।
(२) प्रतिषेधतीति ख० ङ० पुस्तकान्तरञ्च ।
(३) तस्याश्चाहेति ख० ङ० पुस्तकान्तरञ्च ।
(४) प्रक्षिप्ता गाधिसूनवे इति क० ग० घ० च० ।
(५) प्रबोध्वा बलवाच्चेतः इति ख० ङ० पुस्तकान्तरञ्च ।
(६) तस्येति क० घ० ।
(७) ता ददुरिति ख० ङ० पुस्तकान्तरञ्च । आगत्येयञ्च आहत्येति क० ग० घ० च० ।
(८) उपेति वाच्या कुशिकानिति क० घ०, उपेत्य वाचं कुशिकानिति ङ० ।
(९) प्रतिष्ठात्मेति ख० ङ० पुस्तकान्तरञ्च ।
(१०) अन्वचेतयदिति ङ० पुस्तकान्तरञ्च ।
(११) इत्यनयाञ्चान्यनडुहमिति क० घ० । अनडुहमित्यन अनडुहः इति ग० ।

---

(ख) ऋ० ३, ६०, १० ।

(१)अनयोऽङ्गानि चोत्थाप्य अनड्वाहौ महात्मनौ ।
ततश्च स्वशरीरस्थ महान् स स्वयमाप ह ॥१११॥
रथश्च स्वशरीरेण महान् गच्छन् पराददे ।
पराश्चतस्रो यास्तच वसिष्ठद्वेषिणीर्विदुः.(२) ॥११२॥
विश्वामित्रेण याः(३) प्रोक्ता अभिशापा इति स्मृताः ।
द्विषद्द्वेषास्तु ताः प्रोक्ता विद्याश्चैवाभिचारिकाः.(४) ॥११३॥
वसिष्ठास्ता(५)न शृण्वन्ति तदाचार्यकसम्मतम् ।
कीर्त्तनाच्छ्रवणाद्वापि महान् दोषः प्रजायते(६) ॥११४॥
शतधा भिद्यते मूर्द्धा कीर्त्तितेन श्रुतेन वा ।
तेषां बालाः प्रमीयन्ते तस्मात्तास्तु न कीर्त्तयेत् ॥११५॥
विश्वांश्च देवां(७)स्तुष्टाव चतुर्भिरिममित्यृषिः ।
अस्तौद्विश्वात्मना सर्व्वान् मन्यमानः परं पदम् ॥११६॥

---

(१) अनयः इत्यादिसार्द्धश्लोकः क० ग० घ० चिह्नितपुस्तकेषु नेष्यते । तेषु अस्मिन् स्थले, रथस्य सा शरीरस्य महानाच्छन् परोवदे इति पाठोऽस्ति ।

(२) वसिष्ठद्वेषिण्यः स्मृता इति क० ख० ग० घ० ।

(३) स्विति क० ख० ग० घ० च० ।

(४) विद्वेषिण्यः स्मृता विद्यादभिचारेषु प्रस्यते । इति क० ग० घ० च० ।

(५) स्विति ख० पुस्तकान्तरञ्च, ते इति घ० ।

(६) श्लोकार्द्धमेतत् क० घ० चिह्नितपुस्तकयोर्न दृश्यते ।

(७) विश्वान् देवांश्चेति ङ० पुस्तकान्तरञ्च ।

[1]देवानामसुरत्वं तदेकं महदितीरयन्।
अश्विनौ मिव स्वभवो[2] धेनुर्मित्र इहेह वः ॥११७॥
[3]वैश्वदेवीति विज्ञेया मैत्री मित्राय पञ्च तु।
ऐन्द्रार्भवस्तृचस्त्वार्भवे सूक्तः स उत्तमः[4] ॥११८॥
[5]पूर्वे तृचे निपातोऽत्र उभो वाजेन पञ्चमात्।
उपञ्चादुत्तरे षड्भिः स्तुता ऋग्देवता ऋचेः[6] ॥११९॥
ऐन्द्रावरुणः प्रथमो बार्हस्पत्यस्ततः परः[7]।
पौष्णसावित्रसौम्याश्च मैत्रावरुण उत्तमः[8] ॥१२०॥
तुष्टाव जमदग्निश्च[9] तेन देवा ऋता ऋचौ।
देवर्षिपितृपूजार्थं च अन्नाद्यपचक्षुनः[10] ॥१२१॥

---

(१) चक्षौदित्यात्मना सर्व्वानित्यादि महदितीरयन्नित्यन्तपाठः क॰ ग॰ घ॰ चिह्नितपुस्तकेषु नोपलभ्यते।
(२) स्तनवः इति क॰ घ॰ च॰।
(३) वैश्वदेवीति श्लोकार्द्धं ख॰ ङ॰ चिह्नितपुस्तकयोर्न विद्यते।
(४) उत्तमे इति ख॰ ङ॰ पुस्तकान्तरस्य।
(५) पूर्व्वे तृचे इति श्लोकार्द्धं क॰ ख॰ घ॰ चिह्नितपुस्तकेषु नेष्यते।
(६) पौषसादुत्तरास्त्वन्ये षट् ऐयग्देवताऋचा इति क॰ ख॰ ग॰ घ॰ च॰।
(७) वपापरः इति ग॰। तदुत्तरः इति ङ॰।
(८) मसामन्त्यस्तु यत्तृच इति ङ॰ पुस्तकान्तरस्य।
(९) जमदग्निस्तु इति ख॰ ङ॰ पुस्तकान्तरस्य।
(१०) पपायान्नाद्ययचक्षुन इति क॰ ग॰ घ॰ च॰।

यस्य वै श्येनरूपेण आहर(१)द्दिवतो मधु।
सोऽग्निन्तु पञ्चदशभिरिन्द्रं षोडशभिः परैः॥१२२॥
अषिरस्त्वामिति तुष्टाव सूक्तैरेतैस्तु(२) गौतमः।
स भ्रातरमिति त्वास्तु(३) तिस्रस्त्वग्निर्निपातभाक्॥१२३॥
वरुणेनाभिसंस्तौति प्राङ्(४)रन्ते निपातितम्।
त्रिष्टुभेन्द्रदेवते सूक्ते एके(५) प्रत्यग्निरेव तु(६)॥१२४॥
अविर्बोधदिति द्वाभ्यां स्तौति सोमकमेव तु(७)।
तथैव वायुरर्थाय(८) पराभ्यामश्विनौ स्तुतौ॥१२५॥
अयमुग्रमनिन्येऽहं(९) कुर्वाणं गर्भ एव(१०) सन्(११)।
अन्वगात्वदिति.(१२) पुत्रमिन्द्रमाताऽदितिर्यियौ॥१२६॥

---

(१) यस्य च श्येनरूपेण चाहरदिति ख० ग० पुस्तकान्तरञ्च।
(२) रति स्तिति ग० घ०, रति चेति ख० पुस्तकान्तरञ्च।
(३) त्वास्विति ङ०।
(४) अभिसंस्तौत्या प्राङ्किति क० ग० घ० च०।
(५) त्रिष्टुभैन्द्रदैवत सूक्तमेवे इति ख० ग०।
(६) त्रिष्टुभिन्द्रदैवते सूक्ते एके प्रत्यग्निरित्युभे, इति ङ०।
(७) सोमकभूपतिमिति ङ० पुस्तकान्तरञ्च।
(८) वायुषोऽर्थायेति ख० ङ० पुस्तकान्तरञ्च।
(९) अनिन्यामेति क० ख० च०, अनिन्याम इति ग०।
(१०) गर्भमेवेति क० ग० घ० च०।
(११) त्विति क० ख० ग० घ० च०।
(१२) अन्वगादविदितिरिति ङ० पुस्तकान्तरञ्च।

इन्द्रस्य हरयो ह्यश्वा अग्नेरश्वस्तु(१) रोहितः ॥१२५॥
सूर्यस्य हरितश्चैव(२) वायोर्नियुत एव च ।
रासभा रोहितो(३)ऽश्विभ्यामजाः(४)पूष्णश्च(५)वाजिनः ॥१२६॥
पृषतो(६)ऽश्वास्तु मरुतां गावोऽरुण्यस्तथोषसः(७) ।
सवितुर्वाजिनः श्यावा(८) विश्वरूपा बृहस्पतेः ॥१२७॥
संहते देवताभिस्तु(९) स्तूयन्ते सम्पदो(१०) ऽन्यथा ।
आयुधं वाहनं चापि स्तुतौ यस्येह दृश्यते ॥१२८॥
तमेव तु स्तुतं विद्यात्तस्यात्मा बहुधा हि सः ।
कनीनका(क)स्तुकाग्रेषो हर्य्योः स्तुति(११) रिहोच्यते ।
चत्वार्यंतस्य विज्ञेयान्यमस्टह्वाणि(१२) विद्रधे.(ख) ॥१२९॥

इति बृहद्देवतायां चतुर्थोऽध्यायः ।

---

(१) अश्वाश्चेति क० ख० घ० ङ० च० ।
(२) मोक्ता इति ख० ङ० पुस्तकान्तरञ्च ।
(३) रासभो मोहितः इति ख०ङ०पुस्तकान्तरञ्च, रासभौ सहितः इति ग०।
(४) माशा इति क० घ० च० ।
(५) पूष्णश्चेति ख० ङ० पुस्तकान्तरञ्च ।
(६) पृषत्य' इति ङ० पुस्तकान्तरञ्च ।
(७) तथोषसामिति ख० ङ० पुस्तकान्तरञ्च ।
(८) श्यामा इति क० घ० च० ।
(९) चेति ख० ङ० पुस्तकान्तरञ्च ।
(१०) स्तूयन्तेऽप्यसेऽन्यथेति क० घ० च०, स्तूयन्तेऽप्यन्यथोऽन्यथेति ग० ।
(११) धर्मसम्स्तुतिरिति क० घ० च०, स्तुतयोऽप्यर्धशस्तुतिरिति ग० ।
(१२) चत्वारि चरमासियान्याप्रष्टह्वाणीति ख० ङ० पुस्तकान्तरञ्च ।

---

(क) ऋ० १, ७, २ । (ख) ऋ० ४, ३२, २३ ।

## अथ पञ्चमोऽध्यायः ।



प्रेति पञ्चार्धर्चं चौणि(१) दधिक्राणि पराण्यतः ।
ऋग्द्यावापृथिव्यौ स्तौति दधिक्राव्णो (क)मुखे तु या(२) ॥१॥
परोक्षैस्तु ततो वाग्भिर्नामभिस्तु स्तुतास्त्रयः ।
अग्निर्वायुश्च सूर्यश्च हंसः शुचिषदित्यृचा(३) ॥२॥
नियुक्ता सूर्यदेवत्या हंस इत्यैतरेयके(४) ।
द्वे मैत्रावरुणे सूक्ते(५) तत्र(६) चौष्याश्विनाग्निकाः(७) ।
अथ वायो विष्णो(ग) त्वेषु (८)वायव्याः सप्त कीर्तिताः ॥३॥

---

(१) पञ्चार्धर्चान्त्रीणीति ड० ।
(२) दधिक्राव्णा स्तुतौ हि वामिति ख०, दधिक्राव्णो मुखे तु येति ग०, दधिक्राव्णामुतो (ख) हि वामिति ड० ।
(३) इत्युचेति क० ग० घ० च० ।
(४) श्लोकार्द्धमेतत् क० ग० घ० च० चिह्नितपुस्तकेषु न विद्यते ।
(५) द्वे इन्द्रावरुणे इन्द्रादिति ड० ।
(६) तत इति ग० घ० पुस्तकान्तरञ्च ।
(७) चाश्विनाग्निक इति क० ख० ग० घ० च० ।
(८) विष्णो मां वा इति घ० पुस्तकान्तरञ्च ।

---

(क) ऋ० ४, ३८, १ । (ख) ऋ० ६, २२, १५ ।
(ग) ऋ० ७, ९८, १ ।

नव चैवेन्द्रवायव्या ऐन्द्रा[1]स्तिस्रः शतेन षट्[2]।
इदं कथितदैवत्यं यस्तु स्तम्भोत्तमो हृचः[3] ॥४॥
श्रुतिरिन्द्राबृहस्पत्योरष्टावेता ऋचः स्मृताः।
बार्हस्पत्यन्तु तत्सूक्तमिदमित्यौपमे परे।
पुरो धातुः कर्णश्रंसा स इन्द्रानोच्यते[4] ऋचे[5] ॥५॥
तत्सावित्री द्वे तु कौ वैश्वदेवं[6]
मही द्यावा पृथिवीयं तत्परस्त्व[7]।
क्षेत्रस्येति तिस्रः क्षेत्रपत्याः[8]
शुनं[क] वाहाः शुनदेवी त्वृगुत्तमा[9] ॥६॥

---

(१) इन्द्रः इति क० ग० घ० च०।
(२) शतेन षडिति छ०।
(३) इदमित्यौपमे परे इति क० घ० च०, यस्तं स्तम्भीतिमो ह्यचः इति ग०।
(४) स इन्द्राणोच्यते इति पुस्तकान्तरम्।
(५) श्रुतिरिन्द्राबृहस्पत्योरिति श्लोक क० घ० च० चिह्नितपुस्तकेषु नैक्ष्यते।
(६) तत्साविनेको वैश्वदेवमिति छ०।
(७) परस्तु परिति क० ग० घ० च०।
(८) क्षेत्रस्य क्षेत्रपत्यमृत्तुयम्निति क० घ०, क्षेत्रस्येति क्षेत्रपत्यमृ षडित्यति ग०।
(९) शुनदेवमृगुत्तरेति ग० ङ० पुस्तकद्वयम्।

---

(क) ऋ० ४, ५७, ४।

वायुः शुनः सूर्य्य एवात्र[१] सीरः[२]
शुनासीरौ[क] वायुसूर्य्यौ[३] वदन्ति ।
शुनासीरं यास्क इन्द्रन्तु मेने
सूर्य्येन्द्रौ तौ मन्यते शाकपूणिः ॥७॥
शुनासीरौ पञ्चम्यां तु स्तुतौ तौ
सीतायै षष्ठी त्वथ सप्तमी च[४] ।
शुनं नः फालाः[ख] कृषिं स्तौति पादः[५]
शुनं कीनाशाः[ग] कृषिजीवान् मनुष्यान्[६] ॥८॥
शुनं पादे पर्जन्यं तृतीये[७]
पौमृषिः कृषिकामो[८]ऽजगाद ।

---

(१) एवात्रेत्यत्र त्वेवेति ख० ङ० पुस्तकान्तरञ्च ।
(२) सौर्य्यं इति क० घ० च० ।
(३) वायुसूर्य्यमिति क० घ० च० ।
(४) द्वे तु सीतायै षष्ठी सप्तमी चेति क० ग० घ० च० ।
(५) पादे इति ङ० ।
(६) कृषिजीमनुष्यानिति क० घ० च० ।
(७) स्तुतः पादेऽत्र पर्जन्यस्तृतीये इति क० ग० घ० च० ।
(८) चक्रयान् तृषिधर्म्मकाम इति क० घ० च०, चक्रयतृषिधर्मका इति ग० ।

---

(क) ऋ० ४, ५७, ५ । (ख) ऋ० ४, ५७, ८ । (ग) ऋ०
५७, ८ ।

ऋषिं वा[1] स्तौति सर्व्वं हि सूक्तं
समुद्रादित्यग्नेर्मध्यमस्य ॥९॥
आदित्यं वा ब्राह्मणोक्तं प्रदिष्टं
आग्नेयं[2] यद्वाज्यसूक्तं[3] हि दृष्टं[4]।
अपां स्तुतिं वा यदि वा हतस्तुति
गवां स्तुतिं वा सूक्त[5]मेतद्वदन्ति ॥१०॥
स्वर्भानुदृष्टं सूर्य्यस्य अपहत्य[6]तमोऽत्रयः।
सप्तविंशतिभिः सूक्तैरबोधीत्यग्निमस्तुवन्॥११॥
त्रैवृष्ण्य[क]स्त्रसदस्युस्[ख] अश्वमेध इति त्रयः।
स्तूयमानाः परीक्षाः सुरचिम्बिते[7]कश्चित् कश्चित्[8]॥१२॥
ऐक्ष्वाक[9] स्त्र्यरुणो राजा त्रैवृष्णो रथमास्थितः।

---

(१) ऋषिवदिति क॰ ख॰ च॰।
(२) आग्नेयमिति ख॰ ङ॰ पुस्तकान्तरच।
(३) वाय्वाज्यसूक्तमिति क॰ ख॰ च॰, वा प्राज्यसूक्तमिति ग॰।
(४) प्रदिष्टमिति ख॰ ग॰ पुस्तकान्तरच।
(५) गवामेके सौर्य्यमिति क॰ ग॰ ख॰ च॰।
(६) स्वर्भानुदिष्टसूर्य्यस्याप्यघ्नन् ये इति ख॰ ङ॰ पुस्तकान्तरच।
(७) चाम्बिम्बते इति च॰।
(८) *त्रैवृष्णस्त्रसदस्युरेति श्लोकः ख॰ ङ॰ चिह्नितपुस्तकयोर्न विद्यते।*
(९) ऐक्ष्वाकुरिति क॰ ग॰ घ॰ च॰।

---

(क) ऋ॰ ५, २७, १। (ख) ऋ॰ ४, ३८, १।

मन्त्रयाह्वाम्यरमोश्च(१) वृशो जानः(२) पुरोहितः ॥१३॥

स ब्राह्मणकुमारस्य रथो गच्छञ्छिरोऽच्छिनत् ।

एनःस्त्विति अब्रवीच्चैव स राजैनं(३) पुरोहितं ॥१४॥

सोऽथर्वाङ्गिरसान्मन्त्रान्(४) दृष्ट्वा सञ्जीव्य तं शिशुं(५) ।

क्रोधात्समुत्सृज्य राजानमन्यं देशं समाश्रितः ॥१५॥

हरोऽप्याग्नेयमागाच्च(६) तस्यापक्रमणादृषेः(७) ।

अग्नौ न्यस्तानि हव्यानि(८) न ह्यपच्यत(९) कानिचित् ॥१६॥

ततः प्रव्यथितो राजा अभिगम्य प्रसाद्य च(१०) ।

आनीय सदृशं जानं(११) पुनरेव पुरोदधे ॥१७॥

स प्रसक्तो वृशोऽपश्यद्धरस्याग्नेर्नृपक्षये ।

---

(१) यस्य वृशीश्चेति क० ग० घ० ।

(२) वृशोजानः इति ख० ।

(३) राजा तमिति ख० ङ० पुस्तकान्तरञ्च ।

(४) सोऽथ वार्षाणि सामानीति क० ग० घ०, सोऽथर्वा गिरिशान् मन्त्रानिति ख० ।

(५) सुतमिति ङ० ।

(६) चस्येति ख० ग० ङ० पुस्तकान्तरञ्च ।

(७) तस्याप्रक्रमणादृषेरिति क० ग० घ० च०, गुरोरिति ङ० पुस्तकान्तरञ्च ।

(८) धातानि यथानीति क० ग० घ०, प्राप्तानि प्रयानीति ख०, प्राप्तानि चान्यानीति ङ० ।

(९) ह्यपच्यन्तेति पाठः साधुः । न ह्यपचतेति क० ग० घ०, ह्यवहन्ते इति ख०, न भोक्ष्यन्ते चेति ङ० ।

(१०) तमिति ख० ङ० पुस्तकान्तरञ्च ।

(११) आनीय सदृशं दार्ग इत्येव पाठो भवितुमर्हति ।

अविन्दत पिशाचीं च[1] जायां तस्य च भूपतेः ॥१८॥
निषण्णः स तया सार्द्धं मासं द्यां कश्यपावपि[2] ।
तामुपामन्त्रयाञ्चक्रे कमेतं त्वमिति नृपा[3] ॥१९॥
वृषः[4] कुमाररूपेण द्युमन्ता[5]मभ्यभाषत ।
विद्योतिषेति चोक्तायां सहसाग्निरुदज्वलत् ॥२०॥
[6]पिशाचीमदहत्तां स यत्र चोपविवेश सा ।
एष एव परामृष्टो भाल्लवी ब्राह्मणो[7]ऽर्चः ॥२१॥
निदानसंज्ञके ग्रन्थे छन्दोगानामिति श्रुतिः[8] ।
भवेदेव परामर्शः सूक्तस्यास्य व्यपेक्षया[9] ॥२२॥
भवन्ति याज्या मन्त्रा[10] हि विधिशब्देन[11] चोदिताः ।

---

(१) तामिति ग॰ ङ॰ पुस्तकान्तरच ।
(२) कश्यपावपीति क॰ घ॰ च॰ ।
(३) पुरोनृपेति ङ॰ ।
(४) वरः इति क॰ घ॰ च॰ ।
(५) युवंन्तामिति ख॰ ।
(६) ग॰ ङ॰ चिह्नितपुस्तकयोः पुस्तकान्तरे च, पिशाचीमदहत्तां स इति श्लोकात् प्राक्, यद्धमानः समायान्तं प्रकाशश्च प्रकाशएविच-धिष्ठं श्लोकार्द्धं पठितम् ।
(७) भाल्लाभिब्राह्मणः इति ख॰, भाल्लविब्राह्मणः इति ङ॰ ।
(८) एतच्छ्लोकार्द्धं क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न दृश्यते ।
(९) विवक्षयेति ग॰ ङ॰ पुस्तकान्तरच ।
(१०) याज्यास्तेषामिति क॰ ग॰ घ॰ च॰ ।
(११) विधिपूर्वेणेति क॰ ग॰ घ॰ च॰ ।

दृश्यन्ते ब्राह्मणे मन्त्रा एकदेशे प्रदर्शिताः ॥२३॥
जामदग्न्यो यथाप्रिय[1] स्तौतीया[2]श्चैतरेयके।
आप्रियः सुसमिद्धाय[3] पञ्चमं सूक्तमच तु[4] ॥२४॥
एतद्[5]वैश्वदेवी वा अन्या चैन्द्राण्युपोत्तमे।
ऐन्द्राणि द्वादश प्रीणीत्युष्णा[6]यच्च[7] संस्तुतः ॥२५॥
अग्नमेति तु पादेन सहयदामनेन च[8]।
इन्द्राकुत्सेति चैतस्या कुत्सेनेन्द्र स्तुतः सह ॥२६॥
यस्त्वा सूर्य्येति चाग्नीणां पश्चर्च[9] कर्म्म कीर्त्यते।
[10]वैष्णपास्यवृणो राजा अश्वमेध स्तर्षं च यः ॥२७॥
स्तूयमानाः प्रतीष्याः स्युरृषिभिस्ते क्वचित् क्वचित्।
अनस्वन्तेति सूक्तेऽस्मिन्नाग्नेयेऽर्चिर्षयः स्वयम् ॥२८॥
दानस्तुत्य मयंसैताभ्याजर्वामिति केचन।

---

(१) जामदग्न्यक्षपैद्यज्ज इति क० ग० च०, यथाप्रीय इति ग०।
(२) स्तोकीया इति ख० ग० ङ० पुस्तकान्तरश्च।
(३) आप्रिय सुसमिद्धायेति क० ग० घ० च०।
(४) चर्चिर्प्तिति ख० ङ० पुस्तकान्तरश्च।
(५) एदम्निति क० ग० घ० च०, दोदम्निति ख०।
(६) द्वादशान्यादेन्युष्णा इति ङ० पुस्तकान्तरश्च।
(७) स्त्वेति च० ख० ग० घ० च०।
(८) अग्नेति च पादोऽय सहयदा यस्य य इति ख०, यस्य यः इत्यच यस्यास इति ङ० पुस्तकान्तरश्च।
(९) पश्चर्चः इति क० घ० च०।
(१०) वैष्णपास्यवणो राजेत्यादि पादद्वयोऽङ्क क० ग० घ० च० चिह्नित पुस्तकेषु न विद्यते।

आभीरथ्येयणाश्चेभ्यो अग्निं प्रति च दृश्यते ॥२९॥
अयुतञ्च गवां त्रीणि शतान्यथ च विंशतिः ।
सौवर्णशकटं गोभ्यां त्र्यरुणोऽदान्नृपोऽध्वये ॥३०॥
अश्वमेधशतं चोष्ट्रांस्त्रसदस्युर्धनं बहु ।
राज्ञः प्रति च तत्सूक्तं बभाष इति केचन ॥३१॥
आत्मा स्थितात्मने[1] दद्याद्वशीनृपतेर्ऋषिः ।
अत्रेः सुतस्त्वपि बभ्रुमार्त्विज्याय ऋणञ्चयः ॥३२॥
महत्सदक्षिणे सोमे वव्रे तं सोऽप्ययाजयत् ।
ददौ तद्रौशमो राजा सहस्राणि शतानि च ॥३३॥
तस्मै चत्वारि चत्वारि महावीरञ्च काञ्चनम् ।
प्रवर्ग्येषु महावीराः सौवर्णास्तस्य चाभवन् ॥३४॥
प्रतिगृह्य स्वर्षिर्गच्छन् मध्यसेनाग्निना पथि ।
पृष्ट इन्द्रेण चाचख्यौ भद्रं चतसृभिश्च तत् ॥३५॥
सोमस्याम् वैश्वदेवानि एकादश[2] पराण्यत[3] ।
मारुतानि दश प्रेति इत्याभीत्यृषि तु स्तुता[4] ॥३६॥
द्वितीयया गयया स्तुतः सविता शौनकोऽब्रवीत्[5] ।
उपेति बार्हस्पत्यस्तृचो यो मारुत्युगुत्तरः ॥३७॥

---

(1) आर्चिशितात्मने इति पाठः शङ्कितः ।
(2) सोमस्याश्च वैश्वदेवान्येकादशेति ख० ।
(3) विति ड० पुस्तकान्तरयोः ।
(4) पीतोत्याभीत्यृषि तु संस्तुतेति ग०, इत्यपि न बाधा स्तुतेति ख० ड० पुस्तकान्तरयोः ।
(5) श्लोकार्धमेतत् ख० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते ।

तमुष्टुही तु रौद्री स्यात्[१] प्रष्टुतिरिमि तृचि ।
दशस्पतिः शाकपूणिः पर्जन्याग्नी तु गालवः ॥३८॥
यास्कस्तु पूषणं मेने स्तुतमिन्द्रन्तु शौनकः ।
वैश्वानरं भागुरिस्तु माहत्यौपममाश्विनं[२] ॥३९॥
वायव्याश्वर्यवः सौमी द्वयोस्त्वैन्द्री परा तु या[३] ।
[४]अग्निं धर्मं पराञ्जन्ति[५] आश्विनौ स्तौत्युगच्छ च ॥४०॥
प्रेति वां पूषणं या चेत्यर्द्धर्चेऽग्निरिहोच्यते ।
प्रथमेऽथ द्वितीये च स्तुता एति दिवौकसः ॥४१॥
आशाषं मध्यमां स्तौति ततोऽन्या तु बृहस्पतिं ।
[६]ज्याया समिति चादित्यं स वो वायुरिहोच्यते ॥४२॥
तं प्रत्नथे[क]ति सौमी वा दैव्यैन्द्री वा प्रजापतेः ।
परोक्षवैश्वदेवं तदाह कौषीतकिः स्वयम् ॥४३॥
तेषु स्तौयमित्युक्तं देवान् ऊव[ख] इदं परम् ।

---

(१) त्विति क० ग० घ० च० ।
(२) आश्विनीति क० ग० घ० च० ।
(३) इदितैन्द्राग्नंसावित्रीति ख० पुस्तकान्तरञ्च ।
(४) अग्निं धर्ममित्यादिसार्द्धश्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु न पठितः ।
(५) पराजन्तीति पुस्तकान्तरम् ।
(६) ज्याया समिति चादित्यमित्यादि देवान् ऊव इदं परमित्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु नेष्यते ।

---

(क) ऋ० १,८६,१ । (ख) ऋ० १,१०,७ ।

देवानां पत्नीरिति तु [१]देवपत्न्यो द्वृचे स्तुताः ॥४४॥

अयं चतुर्णामिति चेन्द्रवायू

त्रिभिः स्तुतौ वायवुक्थे[क]ति वायुम् ।

इयं द्व्यूचा रोदसी स्तूयतेऽत्र

यस्याः स्तुता मरुतो रुद्रपत्न्याः[२] ॥४५॥

आ रुद्रा स इति त्वस्यां रुद्राणां संस्तुतो गणः ।

मरुतां तु गणश्चैते नाम्ना[३]रुद्रा इति स्तुताः[४] ॥४६॥

यथावग्निरिमौ[५] चोभौ त्वग्नी[६]पार्थिवमध्यमौ[७] ।

यदुत्तमे द्व्येऽर्द्धर्चे इत्थे[ख]ऽग्निं संस्तुतौ द्वृचे ॥४७॥

मध्यमा वाक् स्त्रियः सर्वाः पुमान् सार्द्धञ्च मध्यमः ।

गणाश्च सर्वे मरुतो गुणभेदात् पृथक् पृथक्[८] ॥४८॥

(१) चेति ख० ङ० पुस्तकान्तरयोः ।

(२) क० ग० च० चिह्नितपुस्तकेषु, अयं चतुर्णामितीति श्लोकस्थले, अयं चतुर्णामिति च इन्द्रवायुत्रिभिः स्तुतौ । वायुर्हितीयदान्त्येका इयामिति तु रोदसी । इति पाठो वर्त्तते ।

(३) गणस्तेनाम्नेति क० ग० घ० च० ।

(४) स्तुताः इति क० ग० घ० च० ।

(५) यदयमिति ङ० पुस्तकान्तरयोः ।

(६) चोभावग्नी इति ङ० पुस्तकान्तरयोः ।

(७) पार्थिवमध्यमाविति ख० ।

(८) क० ग० घ० च० चिह्नितपुस्तकेषु, यदुत्तमे द्व्येऽर्द्धर्चे इत्यादिसार्द्ध-श्लोकस्थले अन्ये मरुद्भिरिन्द्रस्ता मरुद्भिः सह संस्तुताविति श्लोकार्द्धं वर्त्तते ।

(क) ऋ० ७, ९०, ३ । (ख) ऋ० १, १८८, ८ ।

राजर्षिरभवद्दार्भ्यो रथवीति(क)रिति श्रुतः[१] ।
स यक्ष्यमाणो राजर्षिरभिगम्य प्रसाद्य च ॥४९॥
आत्मानं कार्य्यमर्थं[२]च ख्यापयन् प्राञ्जलिः स्थितः ।
अवृणीतर्षिमात्रेयमार्त्विज्यायार्चनानसम्(ख) ॥५०॥
स सपुत्रोऽभ्यगच्छत्तं राजानं यज्ञसिद्धये ।
श्यावाश्व(ग)स्त्वार्षिपुत्रस्य पुत्रः खल्वर्चनानसः ॥५१॥
साङ्गोपाङ्गान् सर्ववेदान् यः पित्राध्यापितो मुदा ।
अर्चनानाः सपुत्रोऽथ गत्वा नृपमयाजयत्[३] ।
यज्ञे च विततेऽपश्यद्राजपुत्रीं यशस्विनीम् ॥५२॥
स्नुषा मे राजपुत्री स्यादिति तस्य मनोऽभवत् ।
श्यावाश्वस्य च तस्यां वै सक्तमासीत्तदा मनः[४] ॥५३॥
संयुज्यस्व मया राजन्निति चाभ्यस्य सोऽब्रवीत् ।
श्यावाश्वाय सुतां दित्सुर्महिषीं स्वां नृपोऽब्रवीत् ॥५४॥
किं ते बुद्धिरहं कन्यां श्यावाश्वाय ददामि हि ।
ऋषिपुत्रो दुर्बलो हि जामाता नावयोरिति ॥५५॥
राजानमब्रवीत् सापि नृपर्षिकुलजा ह्यहम् ।

---

(१) श्रुतिरिति ख० पुस्तकान्तरस्थः ।
(२) कार्य्यंवन्तामिति ख० पुस्तकान्तरस्थः ।
(३) श्यावाश्वश्चार्षिपुत्रस्येति सार्द्धश्लोकः क० ख० ग० चिह्नितपुस्तकेषु नोपलभ्यते ।
(४) एतच्छ्लोकार्द्धं क० ख० ग० चिह्नितपुस्तकेषु न दृश्यते ।

---

(क) ऋ० ५, ६१, १९ । (ख) ऋ० ५, ६४, ७ । (ग) ऋ० ५, ६१, ५ ।

नानृषिर्नो हि जामाता नैष मन्त्रान् हि दृष्टवान् ॥५६॥
ऋषये दीयतां कन्या चेदृषिः सा वा भवेत्तथा ।
ऋषिं मन्त्रदृशं वेदपितरं मन्यते यतः[1] ॥५७॥
प्रत्याचष्टे स[2] तं राजा सह सम्मन्त्र्य भार्य्यया ।
अनृषिर्नो न[3] जामाता कश्चिद्भवितुमर्हति ॥५८॥
प्रत्याख्यात ऋषिस्तेन वृत्ते यज्ञे न्यवर्त्तत ।
श्यावाश्वस्य [illegible] कन्यायां मनो नैव न्यवर्त्तत[4] ॥५९॥
ततः स्नुतौ[5] निवर्त्यांश्च तावेतावभिजग्मतुः[6] ।
शशीयसी[क][7] तरन्त[ख]श्च पुरुमीळ्ह[ग][8]श्च पार्थिवम्[9] ॥६०॥
तरन्तपुरुमीळ्हौ[10] तु राजानौ वै ददर्श्यृषी[11] ।
ताभ्यामौ चक्रतुः पूजामृषिभ्यां नृपती[12] स्वयम् ॥६१॥

---

(१) श्यावाश्वाय सुतां दित्सुरित्यादिसार्द्धश्लोकत्रयं क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु नेष्यते।
(२) प्रत्याचचक्षेति ख॰ ङ॰ पुस्तकान्तरयोः।
(३) नैवेति ग॰ ।
(४) न स्म निवर्त्तते इति ख॰ ङ॰ पुस्तकान्तरयोः ।
(५) ततस्तौ त्विति क॰ ग॰ घ॰ च॰ ।
(६) ततः स्नुतौ निवर्त्तेत उभावेताभिजग्मतुरिति ख॰ ङ॰ पुस्तकान्तरयोः।
(७) शशीयसीति ङ॰ पुस्तकान्तरयोः ।
(८) पुरुमीढमिति ङ॰ ।
(९) शतस्त्रोकार्द्धं क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न पठितं ।
(१०) तरन्तपुरुमीढाविति ङ॰ पुस्तकान्तरयोः ।
(११) ददृशिवाविति क॰ घ॰ च॰ ।
(१२) तु पतिरिति क॰ घ॰ च॰ ।

---

(क) ऋ॰ ५, ६१, ९। (ख) ऋ॰ ९, १०५, ११। (ग) ऋ॰ ८, ७१, १४।

महिष्याय दर्शयामास च[1] नृप ।
तरन्तानुमतेनैव[2] प्रादाद्बहुविधं वसु ॥६२॥
अजाविकं गवाश्वञ्च श्यावाश्वाय प्रसीयसी[3] ।
अपि[4] याज्यार्चितौ गत्वा पितापुत्रौ स्वमाश्रमम् ॥६३॥
अभ्यवादयतामर्चि[5] महर्षिं दीप्ततेजसम् ।
श्यावाश्वस्य मनस्यासीदलक्षणादर्शनादहम् ॥६४॥
न लब्धवानिमां कन्यां कन्यां सर्वाङ्गशोभनाम् ।
अप्यहं मन्त्रदर्शी स्यां भवेद्धर्षो महान् मम ॥६५॥
इत्यरण्ये चिन्तयतः प्रादुरासीन्मरुद्गणः[6] ।
ददर्श सदृशान् पार्श्वे तुल्यरूपान्वयात्मन[7] ॥६६॥
समानवयसश्चैव[8] मरुतो रुक्मवक्षसः ।
तान्दृष्ट्वा विस्मितो दृष्ट्वा देवान् पुरुषविग्रहान् ॥६७॥
श्यावाश्वो विस्मितोऽपृच्छत्कोऽन्वेति[9] मरुतस्तदा ।

(१) वै इति ख० ङ० ।
(२) तरन्तानुमता चैवेति क० ग० घ० च० ।
(३) प्रसीयसीति ङ० पुस्तकान्तरे च ।
(४) नौ स्थिति पाठ समूलः ।
(५) अभ्यवादयतामत्रिमिति ङ० पुस्तकान्तरे च ।
(६) अपि याज्यार्चितौ गत्वेत्यादि प्रादुरासीन्मरुद्गणः इत्यन्तपाठ क० ग० घ० च० चिह्नितपुस्तकेषु नेष्यते ।
(७) तुल्यरूपानिवात्मनः इति क० ख० ग० घ० च० ।
(८) चैवमिति ङ० पुस्तकान्तरे च ।
(९) के स्थेति पाठः समीचीनः । केष्ठेतीति क०, कोष्ठेतीति ङ० ।

तांस्तु मरुतो देवानृषिस्तानभ्यबुध्यत(१) ॥६८॥

य ईं वहन्त इत्यृग्भिः षड्भिः(२) स्तुष्टाव तांस्तथा ।

अतिक्रमं स्थितस्त्वृषिर्मेने विप्रुषमात्मनः ॥६९॥

यद्य(३) दृष्ट्वैव तुष्टाव यद्य(४) केष्ठेति(५) पृष्टवान् ।

ततः स्तुत्यानया प्रीता गच्छन्तः पृश्निमातरः(क) ॥७०॥

अवमुच्य स्ववक्षोभ्यो(६) रुक्मं तस्मै तदा ददुः ।

मरुत्सु तु प्रयातेषु श्यावाश्वस्तु महायशाः(७) ॥७१॥

रथवीतेर्दुहितरमगच्छन्मनसा तदा ।

स सद्य ऋषिरात्मानं विवक्षू रथवीतये(८) ॥७२॥

एतं मे स्तोममित्यृग्भ्यां(९) दार्भ्ये(१०) रात्रीं न्ययोजयत् ।

रथवीति तपस्यन्तं(११) समेत्यार्षेण चक्षुषा ॥७३॥

---

(१) तमभ्यनूनबुध्यतेति क० ग० घ० च० ।

(२) बुद्धेति क० ग० घ० च० ।

(३) यान्न इति क० ख० च० ।

(४) यान्वेति क० ग० घ० च० ।

(५) केष्ठेतीति क०, केष्ठेमीति ख० ।

(६) अमुच्य स्ववक्षोभ्य इति ख०, व्यामुच्यते स्ववक्षोभ्य इति ङ० ।

(७) महातपा इति ख० ङ० पुस्तकान्तरयोः ।

(८) सद्यश्च रथवीतये इति क० ग० घ० च० ।

(९) इत्याभ्यामिति क० ग० घ० च० ।

(१०) दृश्ये इति ख० पुस्तकान्तरे ।

(११) रथवीतिमथायान्तमिति ख० ङ० ।

---

(क) ऋ० ५, ६१, १० ।

पि गर्भाणां दृष्टं तदनुमन्त्रणम् ।
भावद्वृत्तं [illegible] तत्तथास्तथाद्रूपं हि दृश्यते ॥८५॥
जरायुगर्भशब्दाभ्यामेतद्रूपं हि दृश्यते[१] ।
मह्ये उपस्थे[२] सावित्र युञ्जतेच्छावद.[३] स्तुत. ॥८६॥
पर्जन्यो वस्तिति तस्मिन्[४] पृथिवी मध्यमा तु[५]वाक्[६] ।
अद्या नो देवसवितरिय तु स्तुतसाविमौ[७] ॥८७॥
वारुणानु प्रघवाजे पञ्चमैन्द्राग्नमुत्तरम्[८] ।
विष्णुं न्यग्र[९]मरुत्मेति मारुत सूक्तमुत्तरम्[१०] ॥८८॥
एतया मरुदाख्यातं यौर्नेन्द्रे प्रतिपूर्व्वकम्[११] ।

---

(१) सवतामपि गर्भाणामित्यादिसार्द्धैकश्लोक: क० ग० घ० च० चिह्नित-पुस्तकेषु नावश्यत ।
(२) मह्योपस्थेतीति क० घ० च० ।
(३) सावित्रे युञ्जतेच्छेति वै इति क० ग० घ० च० ।
(४) पर्ज्जन्यस्तु वशिष्ठेतीति ङ० पुस्तकान्तरञ्च ।
(५) स्मिति ग० ।
(६) स्तुतेति ङ० पुस्तकान्तरञ्च ।
(७) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते ।
(८) उत्तरमित्यत्र उत्तममिति च०, इन्द्रापौष्णामनुष्टये इति ख०, मिन्द्रापौष्णामनुष्टये इति ङ० पुस्तकान्तरञ्च ।
(९) विष्णुं न्यिज्रमिति ङ० पुस्तकान्तरञ्च ।
(१०) उत्तममिति ख० ।
(११) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु नोपलभ्यते ।

औसुकमाशीर्वादम्[1] स्त्रीपुत्राणां पराणि तु[2] । ८८॥

तथ्यादा[3]न्नस्यपनुट[4] मग्निस्तच[5] निपातभाक् ।

प्रजावान् जीवपुत्रो[6] वा गर्भकर्म्मणि संस्तुतौ ॥८०॥

नानारूपाः पयस्विन्य[7] संभवन्तीति संस्तुता[8] ।

आशीर्वादेषु संज्ञासु कर्मसंस्थास्तु देवताः[9] ॥८१॥

निपातभाग् लिङ्गवाक्यात्[10] परीक्षेतेह मन्त्रवित् ।

मन्त्रप्रयोगमन्त्रयोः[11] प्रयोगो[12] बलवत्तरः ॥८२॥

---

(१) आशीर्वादो स्यादिति ख०, आशीर्वादास्येति ङ० पुस्तकान्तरञ्च।

(२) स्त्रीपुत्राणां पराणि षट् इति क० घ० च०, षट् इति ग०, स्त्री- पुत्राणां पदानि षट् इति ङ० पुस्तकान्तरञ्च ।

(३) तथ्यादेति क० घ० च० ।

(४) नस्यापनिर्नोदः इति क० घ० च०, स्याद्यान्नस्य पदैर्नोदे इति ख०, भक्तस्यपनिर्नोदे इति ङ० पुस्तकान्तरञ्च ।

(५) स्तवेति ख० ङ० ।

(६) प्रजावज्जीवपुत्र- इति क० ख० ग० घ० च०, प्रजावान् जीवपुत्रा इति ङ० ।

(७) पयस्विन्यः इति ख० ग० ।

(८) संस्तुतायिति ङ० ।

(९) कर्मसंख्या तु देवतेति ख० ।

(१०) लिङ्गवाक्येति ख० ग० ।

(११) मन्त्रप्रयोगमन्त्राणामिति ग० ।

(१२) प्रयोगे इति ग० ।

विधेस्तयोः परीक्षा[१] स्यान्मन्त्राः स्युरभिधायकाः[२] ।
तस्मात्तेन विसंवादो मन्त्राणां तद्गतानि तु ॥८३॥
गुणाभिधायकानि स्युः सविज्ञानपदानि तु ।
मन्त्रेषु गुणभूतेषु प्रधानेषु च कर्मसु ॥८४॥
प्रधानगुणभूताः स्युर्देवता इति गम्यते ।
त्रिसांवत्सरिकं सत्रं प्रजाकामः प्रजापतिः ॥८५॥
आहरत्सहितः साध्यैर्विश्वैर्देवैः सहेति च ।
तत्र वाग्दीक्षणीयायामाजगाम शरीरिणी[३] ॥८६॥
तां दृष्ट्वा युगपत्तत्र कस्याथ वरुणस्य च ।
शुक्रं चस्कन्द तद्वाभ्यामग्नौ प्रास्तं[४] यदृच्छया ॥८७॥
ततोऽर्चिभ्यो भृगुर्जज्ञे अङ्गारेभ्योऽङ्गिरा[क][५] ऋषिः ।
प्रजापतिसुतौ दृष्ट्वा दृष्टा वागभ्यभाषत ॥८८॥
आभ्यामृषिस्तृतीयोऽपि भवेदेव मे सुतः ।
प्रजापतिस्तथेत्युक्तः प्रत्यभाषत भारतीम् ॥८९॥
ऋषिरत्रिस्ततो जज्ञे सूर्यानलसमद्युतिः ।
योऽङ्गारेभ्य ऋषिर्जज्ञे तस्य पुत्रो बृहस्पतिः ॥१००॥

(१) परीक्षा इति ग° ।
(२) अभिधानका इति ख°, अभिधायिका इति ग° ।
(३) शरीरिणीति शुद्धः पाठः ।
(४) प्रास्यन्निति ख°, प्रास्येति ग° ।
(५) अङ्गारश्चाङ्गिरा इति ख°, अङ्गारेर्यद्गिरा इति ग° ।

(क) ऋ° १, ९९, १ ।

बृहस्पतेर्भरद्वाजो विदथीति[1] य उच्यते[2] ।

मरुत्स्वार्थीहुरुर्यद्य[3] य एवाङ्गिरसो नपात्[क] ॥१०१॥

मपुत्रस्य तु तस्येदं[4] मण्डलं षष्ठमुच्यते ।

त्वं ह्यग्न इति तत्रादावाग्नेयानि त्रयोदश ॥१०२॥

सूक्तानि त्रीणि मूर्द्धानमग्नेर्वैश्वानरस्य तु ।

एकान्नविंशतिश्चैव[5] पिबेत्यैन्द्राण्य[6]तः परम् ॥१०३॥

अग्ने यजे यदित्यस्यां द्वौ देवौ तु[7] निपातितौ ।

प्रीतये नूम[8] इत्येते वैश्वदेव्यावृचौ तु ते[9] ॥१०४॥

ऋग्द्वितीया यदद्यान्यमैन्द्रेति[10] गवां स्तुतिः ।

आयस्थानाम[ख] इत्यस्यां वायुरिन्द्रश्च संस्तुतौ[11] ॥१०५॥

इन्द्रः प्राधान्यतो वाच स्तुतो वायुर्निपातभाक् ।

---

(१) विदथीतीति ङ० ।

(२) प्रजावान् जीवपुत्रो वा इत्यादि विदथीति य उच्यते इत्यन्तपाठः क० ग० घ० चिह्नितपुस्तकेषु नायम्यात ।

(३) सुवन्यस्येति क० ग० घ०, गुरोर्यस्येति ख० ग० ।

(४) सत्सपुत्रस्य तस्यैतदिति क० ग० घ० ङ० ।

(५) एकादिनिंशद्देवात्रेति ख०, एकान्नत्रिंशद्देवात्रेति ङ० । एकोनविंश-तिरिति भवितुमर्हति ।

(६) पिबत्यैन्द्राणीति पाठः शुद्धः ।

(७) देवौ याविति क० ग० घ० ङ० ।

(८) नम इति क० घ० ङ० ।

(९) एते इति घ० ।

(१०) चेमीति ग० ।

(११) इन्द्रवायू स्तुतं स्तुताविति घ० पुस्तकान्तरस्य ।

---

(क) ऋ० १, १०१, १ । (ख) ऋ० ६, २०, १ ।

अयं देवमृचं सौम्यमैन्द्रमेके प्रचक्षते[१] ॥१०६॥
शरीरं चक्षुरित्यस्यां तृचोऽधीति[२] तृचोः[क] स्तुतिः[३] ।
पितरं स्तौति शंयु[ख]श्च तृचस्यान्ते पदे स्वयम्[४] ॥१०७॥
स्वादु[ग]ष्किलायमित्येताः पञ्चर्चः सौम्य एव वा[५] ।
इन्द्रः प्रधानतो वाच स्तुतः सोमो निपातभाक् ॥१०८॥
इन्द्रस्यैन्द्रनिपातोऽयं स्वयमन्ते हैतरेयके[६] ।
अगव्यूति[घ] स्तौति देवान् पादो भूमिमथोत्तरः ॥१०९॥
बृहस्पतिं तृतीयोऽस्तौत्[७] त्विन्द्र[८]मेवोत्तमं पदम् ।
ऋषिस्तु तौ तथेत्युक्त्वा पायुं[ङ] पुत्रमभाषत ॥११०॥
अधर्षणीयौ शत्रूणां कुरुष्वैतौ[९] नृपाविति ।
पितरं स तथेत्युक्त्वा युद्धोपकरणं तयोः ॥१११॥
जीमूतस्येति[१०] सूक्तेन पृथक्त्वेनाभ्यमन्त्रयत् ।

---

(१) इन्द्र प्राधान्यतो वाचेति श्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते ।
(२) अधीतिरिति विसर्गयुक्तपाठः शुद्धः ।
(३) य आनयदिति तस्य तृचोऽधीति तृचस्तुतिरिति क० ग० घ० च० ।
(४) तृचस्यान्ते पदे स्वकमिति ख० ङ० पुस्तकान्तरयोः ।
(५) इति नु सौम्य मध्यं उत्तरः इति क० ग० च० ।
(६) इन्द्र प्रधानतो वाचेत्यादि स्वयमन्ते हैतरैयके इत्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु न विद्यते । श्रूयते इति अन्य पाठः ।
(७) तृतीयस्त्विति क० ङ० पुस्तकान्तरयोः ।
(८) स्विन्द्रमिति पाठः साधुः ।
(९) कुरु पुत्रेति घ० पुस्तकान्तरयोः ।
(१०) जीमूतोयेनेति क० घ० च०, जीमूतस्येनेति ग० ।

---

(क) ऋ० ६, ४७, ३३ । (ख) ऋ० १, २७, ९ । (ग) ऋ० ६, ४४, २१ ।
(घ) ऋ० ६, ४७, २० । (ङ) ऋ० ८, २, ७ ।

प्रथमा लग्न सूक्तस्य योद्धारं स्तौति वर्मिणम् ॥११२॥
धनुः स्तौति(१) द्वितीया तु तृतीया ज्याभिमन्त्रिणी(२)।
स्तौति चार्त्नी (क) चतुर्थी च(३)गिषुधिं स्तौति पञ्चमी ॥११३॥
अर्द्धर्च(४) सारथिं षष्ठ्या रश्मयोऽर्द्धेन संस्तुताः।
अश्वांस्तु सप्तमी स्तौति आयुधागारमष्टमी ॥११४॥
नवमी रथगोपांस्तु दशमी रणदेवताः।
इषुमेकादशी(५) स्तौति द्वादशी कवचस्तुतिः ॥११५॥
त्रयोदशी कशां स्तौति हस्तघ्नं चतुर्दशी।
प्रथमे पञ्चदश्यास्तु पादे दिग्ध(६) इषुः स्तुतः(७) ॥११६॥
अयोमुखी द्वितीये तु अर्द्धऽस्त(८) वारुणं परम्(९)।
षोडश्यां(१०) लग्न सूक्तस्य धनुर्मुक्त इषुः स्तुतः ॥११७॥
सप्तदश्यां तु युद्धादिः(११)कवचस्य च बन्धन(१२)।

(१) धनुरथेति क० ख० च०।
(२) ज्याभिमन्त्रिणीति क० ख० च०।
(३) स्तौत्युरार्त्नी चतुर्थी चेति क० ग० ख० च०।
(४) अर्थेनेति क० ख० च०।
(५) इषुधिश्चैकादशीति क० ख० च०, इषुश्चैकादशीति ग०।
(६) दिग्धः इति ग०।
(७) इषुस्ततः इति ग० ङ०।
(८) अर्द्धर्चमिति ख०।
(९) परे इति ख०।
(१०) षोडशीति क० ग० ख० च०।
(११) युद्धदेशेति क० ख० च०, योद्धादेरिति ख०।
(१२) बाधत० इति क ग ख० च०।

(क) ऋ० ६, ७५, ४।

स्तुतिरष्टादशी ज्ञेया युयुत्सोर्दैव्युगुत्तमा(१) ॥११८॥
अयास्ते चोत्तमे पादे ऋषि(२)रात्मन आशिष ।
सूक्तेनानेन [illegible] स्तुत्वा सद्वामाज्ञान्नृषिस्तयो ॥११९॥
तत(३) प्रस्थापयामास पुनर्वारशिखान्(४) प्रति ।
एतद्वयस्ते चतस्रभी राज्ञो साहाय्यकाङ्क्षया ॥१२०॥
भरद्वाजोऽभितुष्टाव प्रीतस्तेन पुरन्दर ।
अभ्यावर्त्तिनमासाद्य हर्यूपीयानदीतटे ॥१२१॥
घटितश्चायमानेन(क) अघानैतान् शचीपति(५) ।
एव(६) वारशिखा(७)ञ्जित्वा तावभ्यावर्त्ति(८)सार्ञ्जयौ(ख) ॥१२२॥
भरद्वाजाय गुरवे ददतुर्विविधं वसु ।
भरद्वाजश्च गर्गश्च दृष्टाविश्लेष वै पथि ॥१२३॥
द्वौ च(९) प्रस्तोक(ग) इत्याभिदांन तस्मै(१०) प्रशशत ।

---

(१) स्तुतिरुत्तमेति क० ग० घ० च० ।
(२) ऋषिरिति ङ० ।
(३) तयोरिति क० ग० च० ।
(४) वारिशिखानिति ग० ।
(५) एतद्वयसे चतस्रभिरित्यादि अघानैतान शचीपतिरित्यन्तपाठ क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते ।
(६) तौ त्विति क० ग० घ० च० ।
(७) वारिशिखानिति ग० ।
(८) ततोऽभ्यावर्त्तीति क० ग० घ० च० ।
(९) दयानिति क० ग० घ० च० ।
(१०) तद्दे इति क० ग० घ० च० ।

---

(क) ऋ० ६, २७, ८ । (ख) ऋ० ६, ४७, २५ । (ग) ऋ० ६, ४७, २२ ।

(१)प्रसङ्गादिह(२) याः सूक्ते देवताः परिकीर्त्तिताः ॥१२४॥
ता एव सूक्तभाजस्तु मेने राथीतरीसुतः(३)।
प्राजापत्यो मरीचिर्हि मारीचः काश्यपोऽभवत्(४) ॥१२५॥
तस्य देव्योऽभवञ्जाया(५) दाक्षायण्यस्त्रयोदश।
अदितिर्दितिर्दनुः काला दनायुः सिंहिका मुनिः(६) ॥१२६॥
क्रोधावशा वरिष्ठा च सुरभिर्विनता तथा।
कद्रुश्चैवेति दुहितॄः कश्यपाय ददौ स च(७) ॥१२७॥
तासु देवासुराश्चैव गन्धर्वोरगराक्षसाः।
वयांसि च पिशाचाश्च जज्ञिरेऽन्याश्च जातयः ॥१२८॥
तत्रैका त्वदितिर्देवी द्वादशाजनयत्(८) सुतान्।
भगश्चैवार्यमांश(क)श्च मित्रो वरुण एव च ॥१२९॥

---

(१) ख॰ ङ॰ चिह्नितपुस्तकयोः पुस्तकान्तरे च, प्रसङ्गादिह याः सूक्ते इति श्लोकार्द्धात् प्राक्,—
ऋषिरप्यभितुष्टाव दानं तत्र च तस्य तु।
ऋचैकया द्वयां षष्ठे दत्तं सङ्कीर्त्तयत् स्वयम्॥
इत्यधिकं पठितम्।
(२) प्रसङ्गा त्विहेति क॰ ग॰ घ॰ च॰।
(३) राथीतरसुताविति क॰ घ॰ च॰।
(४) मुनिरिति क॰ ग॰ घ॰ च॰।
(५) जाया इति क॰ घ॰ च॰।
(६) विशाविति ख॰।
(७) अदितिरित्यादिसार्द्धैकश्लोकः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न विद्यते।
(८) द्वादशाजनयदिति क॰ ग॰ घ॰ च॰।

(क) ऋ॰ २, १, ४।

धाता चैव विधाता च विवस्वांश्च महाद्युतिः ।
त्वष्टा पूषा तथैवेन्द्रो द्वादशो विष्णुरुच्यते[१] ॥१२०॥
द्वन्द्वं तस्मात्तु तज्जज्ञे[२] मित्रश्च वरुणश्च ह[३] ।
तयोरादित्ययोः सत्रे दृष्ट्वाप्सरसमुर्वशीम् ॥१२१॥
रेतश्चस्कन्द कुम्भे तु[४] न्यपतद्[५]वासतीवरे ।
तेनैव तु मुहूर्तेन वीर्यवन्तौ तपस्विनौ ॥१२२॥
अगस्त्यश्च वसिष्ठश्च तत्रर्षी संबभूवतुः ।
बहुधा पतिते शुक्रे कलशेऽथ जले स्थले ॥१२३॥
स्थले वसिष्ठस्तु मुनिः सम्भूत ऋषिसत्तमः ।
कुम्भे त्वगस्त्यः सम्भूतो जले मत्स्यो महाद्युतिः[६] ॥१२४॥
उदियाय ततोऽगस्त्यः शम्या[क]मात्रो महातपाः[७] ।
मानेन सम्मितो यस्मात् तस्मान्मान्य इहोच्यते ॥१२५॥
यदा कुम्भादृषिर्जातः कुम्भेनापि हि[८] मीयते ।

(१) भगश्चैवार्यमांशश्चेत्यादिसार्द्धश्लोकः ग० घ० च० चिह्नितपुस्तकेषु नोपलभ्यते ।
(२) जज्ञाते इति च० ।
(३) मित्रस्य वरुणस्य चेति क० ख० ग० घ०, सचेति ख० ग० ।
(४) तत्कुम्भे इति ग० ङ० पुस्तकान्तरम् ।
(५) न्यपतदिति ग० ङ० पुस्तकान्तरम् ।
(६) बहुधा पतिते शुक्रे इत्यादिकं श्लोकं क० ग० घ० च० चिह्नित-पुस्तकेषु न पठितम् ।
(७) महातपा इति ग० ङ० पुस्तकान्तरम् ।
(८) कुम्भे मीयते इति क० ख० च० ।

(क) ऋ० १, ७४, ७ ।

शुभ इत्यभिधानन्तु परिमाणस्य लक्षणम्[1] ॥१२६॥
ततोऽस्तु दृह्यमाणास्तु वसिष्ठः पुष्करे स्थितः ।
सर्व्वतः[2] पुष्करं तत्र विश्वेदेवा अधारयन् ॥१२७॥
उत्थाय सलिलात्तस्मादस्य तेपे महत्तपः ।
नामास्य गुणतो जज्ञे वसतेः श्रैष्ठ्यकर्मणः[3] ॥१२८॥
अदृश्यमृषिभिश्चेन्द्रं[4] सोऽपश्यत्तपसा पुरा ।
सोमभागानयो[5] तस्मै प्रोवाच हरिवाहनः ॥१२९॥
ऋषयो वा इन्द्रमिति ब्राह्मणात्तद्धि दृश्यते[6] ।
वसिष्ठस्य वसिष्ठाय[7] ब्राह्मणा वै ततोऽभवन् ॥१४०॥
सर्व्वकर्म्मसु यज्ञेषु दौत्यणीयास्ततोऽभवन्[8] ।
तस्मादद्यापि[9] वासिष्ठाः सदस्यास्त्विह कर्म्मणि[10] ॥१४१॥

---

(१) लभ्यते इति क॰ घ॰ च॰ ।
(२) सर्व्वेनेति क॰ ग॰ घ॰ च॰ ।
(३) श्रेष्ठकर्म्मणः इति पाठः साधुः । श्रैष्ठ्यकर्म्मणेति ङ॰ पुस्तकान्तरञ्च ।
(४) चैन्द्रमिति ङ॰ पुस्तकान्तरञ्च ।
(५) सोमभागांस्ततः इति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(६) एतच्छ्लोकार्द्धं क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न दृश्यते ।
(७) वासिष्ठाश्च वसिष्ठस्येति पाठः सङ्गतः । वसिष्ठाश्च वसिष्ठायेति क॰ च॰, वसिष्ठाश्च वसिष्ठायेति ग॰ घ॰ ।
(८) सर्व्वमर्म्मेषु यज्ञेषु दक्षिणीयतमाश्चयेति क॰ घ॰ च॰ ।
(९) येऽद्यापीति क॰ ग॰ घ॰ च॰ ।
(१०) वसिष्ठाः सदस्याः स्युस्तु कर्हिचिदिति क॰ ग॰ घ॰ च॰ ।

अर्धर्चेद्[1] दक्षिणाभिख्यान् मानवेयो श्रुति[2]स्त्वियम्[3] ।
वसिष्ठ मैत्रावरुणिः सूक्तैः षोडशभिः परैः ॥१४२॥
तुष्टाव चाग्नि[क]मित्यग्निमामन्त्रय जुषस्व नः[ख] ।
प्राग्नये[ग]ऽथ प्रसवाजो[घ] द्वितीयं प्राग्नये[ङ] वृषम् ॥१४३॥
वैश्वानरीयाण्येतानि[4] त्वे द्वे[च]न्द्राणि परान्ततः ।
दश पञ्च च सूक्तानि निपातो मरुतां स्तुतिः ॥१४४॥
नकिः सुदास[छ] इत्यस्यां दानं पैजवनस्य तु ।
वसिष्ठेन चतुर्थ्यस्मि[5]र्द्वे नमु[ज]रिति कीर्त्तितम् ॥१४५॥
संवादः सूक्तमैन्द्रं[6] वाग्निन्यं नमु[7] प्रपद्यते ।
वसिष्ठागस्त्ययोरत्र कीर्त्यते तनयैः सह ॥१४६॥
इन्द्रेण चैव संवादो महिमा जन्म कर्म च ।

---

(१) मृजयेदिति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(२) स्तुतिरिति क॰ घ॰ च॰ ।
(३) दध्यार्धं मानवी श्रुतिरिति ख॰ ङ॰ ।
(४) वैश्वानरीयमित्येतदिति क॰ घ॰ च॰ ।
(५) चतुर्भिस्त्विति क॰ ग॰ घ॰ च॰ ।
(६) संवादमैन्द्रसूक्तमिति ङ॰ पुस्तकान्तरञ्च, संवादे सूक्तमैन्द्रे इति ख॰ ।
(७) वाग्निन्य वस्त्विति क॰ ग॰ घ॰ च॰ ।

---

(क) ऋ॰ ७, १, १ । (ख) ऋ॰ ७, २, १ । (ग) ऋ॰ ७, ५, १ ।
(घ) ऋ॰ ७, ६, १ । (ङ) ऋ॰ ७, १३, १ । (च) ऋ॰ ७, १८, १ ।
(छ) कुम्भे नावो २, १० । (ज) ऋ॰ ७, १८, २२ ।

पराणि प्रे(क)ति चत्वारि वैश्वदेवानि यानि(१) तु ॥१४७॥
स्तौत्युगम्रा(ख)महिं तत्र मानो(ग)ऽहिर्बुध्न्य(घ) एव च।
अहिराहन्ति मेघान् स एति वा तेषु मध्यमः ॥१४८॥
योऽहिः स बुध्न्यो बुध्नेति सोऽन्तरिक्षेऽभिजायते(२)।
उदुष्य(ङ)सवितुः सूक्तं(३) ग्रावो (च)वाजिनदेवताः(४) ॥१४९॥
हृचो(५)ऽर्द्धर्चस्य पादोऽत्र प्रथमायामृचि स्तुतः(६)।
पादश्चैव तृतीयोऽत्र प्रथमायामृचि स्तुतः(७) ॥१५०॥
यथार्द्धर्चो भगभुग(छ)स्तथा सूनं भगो(ज)ऽपि च।
स हि रत्नानि सविता सुवातीति भगः स वा(८) ॥१५१॥

---

(१) तत्रेति ख० ङ० पुस्तकान्तरञ्च।
(२) अहिराहन्तीत्यादि सोऽन्तरिक्षेऽभिजायते इत्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु न विद्यते।
(३) सूक्ते इति ख० ङ०।
(४) वाजिनदेवत इति ख० ङ० पुस्तकान्तरञ्च।
(५) हृचः इति ग०।
(६) हृचोऽर्द्धंच भागोऽत्र भगभुग इति श्रुतिरिति ख० ङ० पुस्तकान्तरञ्च। श्रुतिरित्यत्र श्रुतः इति ग०।
(७) पश्चात्यामहिदैवतः इति क० ग० घ० च०।
(८) एष श्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु नापश्यत।

---

(क) ऋ० ७, ३१, ६। (ख) ऋ० ७, ३४, १६। (ग) ऋ० ७, ३४, १७। (घ) ऋ० ७, ३४, १७। (ङ) ऋ० ७, ३८, १। (च) ऋ० ७, ३८, ७। (छ) ऋ० ७, ३८, ६। (ज) ऋ० ७, ४१, ५।

वैश्वदेवानि पञ्चोर्ध्वं पञ्चर्चो भगदेवता.[1]।
प्रातर्जित[क]मुपस्थेऽन्या द्रष्टुं स स्तौत्यात्रि[2]रेव वा ॥ १५२॥
एके [illegible] प्रात[ख]रित्यस्यां भगमेव[3] प्रचक्षते।
आद्यान्त्ये ते तु पश्यतः कीर्त्तयन्ति[4] प्रथक्स्तुतः ॥१५२॥
ऋक्षेषु[5] देवता मान्या मान्यास्तत्र स्तुवन्ति[6] च।
सालोक्यात्[7]साहचर्याद्वा संस्तवाद्वा पुनः ॥१५८॥
गणस्थामाद्भक्तितो वा कीर्त्यन्तेऽन्यास्तु देवताः।
दाधिक्रमथ सावित्रं रौद्रमित्यनुपूर्व्वशः ॥१५५॥
दधिक्रां[ग] प्रथमायान्तु[8] देवताः परिकीर्त्तिताः।
ता ज्ञेया आप[घ] आप्यं स्यादाग्नेयः प्रथमस्तृचः ॥१५६॥
उत्तमा वैश्वदेवी वा आर्भवी वा निगद्यते[9]।

---

(१) पञ्चोर्ध्वं पञ्चर्चो भगदैवत इति क० ख० ग० घ० च०।
(२) मद्रं स्तौत्यत्रीरिति ग० घ० च०, दृष्ट्वाप्यात्रीरिति छ० पुस्तकान्तरञ्च।
(३) प्रातरित्येतां भागमेवेति ख० छ० पुस्तकान्तरञ्च।
(४) आद्यान्तेषु तु ज्ञेषु तु पश्यतीर्त्तयन्तीति छ० पुस्तकान्तरञ्च।
(५) ऋक्षेऽस्मिन्निति ख० ग० छ० पुस्तकान्तरञ्च।
(६) स्तुवन्त्या अन्यास्तत्र भवन्तीति ख० ग० छ० पुस्तकान्तरञ्च।
(७) कालादेति ख० छ० पुस्तकान्तरञ्च।
(८) प्रथमायान्त्विति क० ग० घ० च०।
(९) वैश्वदेवो तु समुद्रज्येष्ठेत्यस्यां स्तुतिरिति क० घ० च०।

---

(क) ऋ० ७, ४१, १। (ख) ऋ० ७, ४१, १। (ग) ऋ० ७, ४४, १।
(घ) ऋ० ७, ४७, १।

वैश्वदेवे तथा प्रस्त[१] आर्भवं शस्यते हि तत् ।
दंगमेऽङ्कि समस्ताश्च समुद्रज्येष्ठा[क]अपां स्तुतिः[२] ॥१५७॥

इति वृहद्देवतायां पञ्चमोऽध्यायः ।

---

(१) प्रास्ते इति ग० ।
(२) वैश्वदेवे तथा प्रस्त इत्यादि स्तुतिरित्यन्तपाठः क० ग० घ० चिह्नित-पुस्तकेषु न विद्यते ।

---

(क) ऋ० ७, ४९, १ ।

क्रन्दन्त सारमेय स धावन्त दृष्ट्वसुदत ॥१२॥
यदर्जुने(क)ति च त्रिभि सान्त्वयित्वा ऽप्यसुस्वपत्(१) ।
स त(२) प्रस्वापयामास जनमन्यञ्च वारुणम् ॥१३॥
ततस्तु वरुणो राजा स्वान् पाशान् प्रत्यमुञ्चत(३) ।
स बद्ध(४) पितर सूक्तैस्त्रिभिरित उत्तरै(५) ॥१४॥
अभितुष्टाव धीरे(ख)ति मुमोचैनन्ततः पिता ।
ध्रुवास्त्वे(ग)ति चोक्ताया पाशा अस्यामुमोचिरे(६) ॥१५॥
पराणि षौणि सूक्तानि वायव्यानि प्रवीरया(घ) ।
अत्र तास्त्वे(७)न्द्रवायव्या ऋचो(८) यास्तु(९) द्विषत्सृतानि ॥१६॥
प्रवीरयोक्ता वायव्या' प्रा उ(१०) गौत्यैतरेयके ।

---

(१) क्रन्दन्तमित्यादि सान्त्वयित्वा ऽसुस्वपदित्यन्तपाठ: क० ग० घ० च० चिह्नितपुस्तकेषु न विद्यते ।
(२) स्वमिति ख० ङ० पुस्तकान्तरेषु ।
(३) स्वै पाशै प्रत्यबध्यत इति क० ग० घ० च० ।
(४) बुद्धेति क० घ० च ।
(५) अत्र स वाक्ये पाशै भुवा सत्येति दृश्यते इति ख० ङ० पुस्तकान्तरेषु ।
(६) मुमुचिरे इति पाठ शुद्ध ।
(७) चेति ख० ङ० पुस्तकान्तरेषु ।
(८) सुतासिति क० ग० घ० च० ।
(९) यास्त्विति ख० ङ० पुस्तकान्तरेषु ।
(१०) प्रास्विति ख० ।

---

(क) ऋ० ७, ५५, २ ।　(ख) ७, ८६, १ ।　(ग) ऋ० ७, ८८, ७ ।
(घ) ऋ० ७, ९०, १ ।

सरस्वती प्रपद्यस्व मा त्वा[१] वक्ष्यति नाहुष ॥२२॥
तथेत्युक्त्वा जगामाशु आपगा[२] स सरस्वतीम् ।
सा चैनं प्रतिजग्राह दुदुहे च पयो घृतम्[३] ॥२३॥
एतदत्यद्भुतं कर्म सरस्वत्या नृप प्रति ।
वातृषि[४] कीर्त्तयामास प्रथमस्य द्वितीयया ॥२४॥
द्वे बार्हस्पत्ये ऐन्द्रे च[५] वैष्णवे तु[६] परे तत ।
उत्तमैन्द्रश्च तिस्र[क] स्तु[७] पार्जन्ये तिस्र उत्तरे ॥२५॥
आग्नेय्यर्क् प्रथमा तत्र प्रथमस्य तृतीयया ।
यज्ञे प्रायेन्द्रमेवासीदन्यया त्विन्द्राबृहस्पती[८] ॥२६॥
तृतीया नवमी चैव कौत्सीन्द्राब्रह्मणस्पती[९] ।

---

(१) ते इति ख० ङ० पुस्तकान्तरञ्च ।
(२) जगामाथ मावनीमिति ख० ङ० पुस्तकान्तरञ्च ।
(३) प्रतिजग्राह सा चैनं पय सर्पिश्च दुग्धवीति क० ग० घ० च० ।
(४) वात्य इति ख० ।
(५) ऐन्द्रे यज्ञे द्विव सूक्ते इति क० घ० च०, यज्ञे बार्हस्पत्यमैन्द्र मिति ग० ।
(६) चेति ख० ङ० पुस्तकान्तरञ्च ।
(७) ऽन्यो द्वितीयोत्तमैन्द्रेति क० घ० च० ।
(८) आग्नेय्यर्क् प्रथमा तत्रेत्यादि यज्ञ्या त्विन्द्रा बृहस्पती इत्यन्तपाठ क० ग० घ० च० चिह्नितपुस्तकेषु नोपलभ्यते । तेषु चास्मिन् स्थले, कौत्सीन्द्र प्रथमा स्तव द्वितीयाद्या बृहस्पति । इति श्लोकार्द्धं वर्त्तते ।
(९) सहेन्द्राब्रह्मणस्पती इति ख० ङ० पुस्तकान्तरञ्च ।

(क) ऋ० ७, १०१, १ ।

संवत्सर(क)न्तु माण्डूकमैन्द्रासोमं(१) परन्तु यत् ॥२७॥
अपिर्दद्यां रक्षोघ्नं(२) पुत्रशोकपरिप्लुतः ।
हते पुत्रशते क्रुद्धः सौदासैर्दुःखितस्तदा(३) ॥२८॥
ये पाकशंस(ख)मृक् सौम्या(४) आग्नेयी तत उत्तरा ।
एकादशी वैश्वदेवी सौम्यस्तस्याः परो तृचः(५) ॥२९॥
यदि वाह(ग)मृगाग्नेयी ऐन्द्री यो मे(घ)ति तु स्मृता(६) ।
वायव्यौ प्रयाजिगातो(ङ)ति वितिष्ठध्वं(च) तु मारुती ॥३०॥
प्रवर्त्तये(छ)ति पञ्चैन्द्र ऐन्द्रासोमीत्यृगुत्तमा ।
अपिस्त्वाग्निपमाशास्ते मानो रक्ष(ज) इति त्वृचि(७) ॥३१॥
दिवस्यैव पृथिव्याश्च तथा पाप्मनमात्मनः ।
उलूक यातुं(झ)(८) जह्येनाशानारूपाभिशापदान्(९) ॥३२॥

---

(१) मण्डूका इन्द्रासोममिति ख० ङ० पुस्तकान्तरच ।
(२) राक्षोघ्नमिति क० घ० ङ० च० ।
(३) एतच्छ्लोकार्द्धं क० घ० च० चिह्नितपुस्तकेषु नेष्यते ।
(४) सौम्याविति ङ० ।
(५) तृच इति ग० ।
(६) यो मेतीन्द्र' स्मृतोऽर्द्धयेति ङ० पुस्तकान्तरच ।
(७) तृचे इति क० घ० च० ।
(८) यात्विति क० ख० ग० घ० च०, यान्त्विति पुस्तकान्तरम् ।
(९) एष श्लोकः क० घ० च० चिह्नितपुस्तकेषु नेष्यते ।

---

(क) ऋ० ७, १०३, १ । (ख) ऋ० ७, १०४, ९ । (ग) ऋ० ७, १०४, १४ । (घ) ऋ० ७, १०४, १६ । (ङ) ऋ० ७, १०४, १७ । (च) ऋ० ७, १०४, १८ । (छ) ऋ० ७, १०४, १९ । (ज) ऋ० ७, १०४, २३ । (झ) ऋ० ७, १०४, २२ ।

पञ्चदश्यां तु सूक्तस्याष्टम्यां[१] चैव वारुणिः ।
दुःखशोकपरीतात्मा प्रपते विलपन्निव ॥२३॥
हते पुत्रशते तस्मिन्[२] वसिष्ठो दुःखितस्तदा ।
रक्षोभूतेन शापात्तु सुदासेनेति नः श्रुतं[३] ॥२४॥
काण्वश्चैव प्रगाथश्च घोरपुत्रौ बभूवतुः ।
गुरुणा तावनुज्ञातावूषतुः सहितौ वने ॥२५॥
वसतोश्च तयोस्तत्र काण्वपत्न्याः शिरःस्पृशन्[४] ।
सुप्ता कनीयान् काण्वस्योत्सङ्गावन्वबुध्यत[५] ॥२६॥
प्रबुद्धमानस्तु तं कण्वः क्रुद्धः पापाभिशङ्कया ।
बोधयामास पादेन दिधक्षन्निव तेजसा ॥२७॥
विदित्वा तस्य तं भावं प्रगाथः प्राञ्जलिः स्थितः ।
मातृत्वे च पितृत्वे च वरयामास तावुभौ ॥२८॥
स घौरो[६] वाथ काण्वो वा वंशजैर्वेऽङ्गभिः पितुः ।
ददर्शान्येषु सहितः ऋषिर्मण्डलमष्टमम् ॥२९॥

---

(१) षष्ठ्यामिति क॰ ग॰ घ॰ च॰ ।
(२) पुत्र इति ख॰ ग॰ पुस्तकान्तरञ्च ।
(३) वै श्रुतिरिति क॰ ग॰ घ॰ च॰ ।
(४) शिरःस्पृशमादिति क॰ घ॰ च॰ । शिरः स्पृशदिति ख॰ ग॰ ।
(५) उत्सङ्गेऽनवबुध्यतेति क॰ घ॰ च॰ । काण्वस्योत्सङ्गेन लब्ध्यतेति ख॰ ग॰ पुस्तकान्तरञ्च ।
(६) घोर इति क॰ ख॰ घ॰ च॰ ।

माचिदे(क)न्द्राणि चत्वारि प्रगाथस्य सूर(ख)मित्यृचि ।
तुष्टावाङ्गिरसी नारी वसन्तौ(१) शश्वती(ग) पतिम् ॥४०॥
स्त्रियं सन्तं(२) पुमांसन्तमासङ्गः स्तुतवानृषिः(३) ।
तस्य(४) दानं स्तुतौ(घ)त्वृग्भिश्चतुर्भिः परिकीर्त्तितम् ॥४१॥
गिरे(ङ)त्यृग्भ्यां तु काण्वस्य विभिन्दोः परिकीर्त्तितम् ।
पाकस्थाम्नस्तु(५) भोजस्य चतुर्भिर्यमिति(च) स्तुतम् ॥४२॥
पौष्णौ प्रेति(छ) प्रगाथौ द्वौ(६) मन्यते शाकटायनः ।
ऐन्द्रमेवाद्य पूर्वन्तु गालवः पौष्णमुत्तरम्(७) ॥४३॥
ऐन्द्राणामिह सूक्तानामुत्तमस्योत्तमे तृचे ।
दानं राज्ञः कुरुङ्गस्य सूरं राध(ज) इति स्तुतं ॥४४॥
सूरा(झ)दित्याश्विने सूक्ते सप्तर्षिंमत्तामे(ञ) यथा ।

---

(१) वसन्ताविति ख० । वसताविति ङ० ।
(२) व्यन्तमिति ग० ।
(३) मासं तं स्तुतवान्वैरिरिति ङ० पुस्तकान्तरञ्च ।
(४) तस्येति ख० ङ० पुस्तकान्तरञ्च ।
(५) चेति ख० ङ० ।
(६) त्विति ख० ङ० पुस्तकान्तरञ्च ।
(७) उत्तममिति ङ० ।

---

(क) ऋ० ८, १, १ । (ख°) ऋ० ८, १, १० । (ग) ऋ० ८, १, ३४ ।
(घ) ऋ० ८, १, ३० । (ङ) ऋ० ८, २, ४१ । (च) ऋ० ८, ३, २१ ।
(छ) ऋ० ८, ४, १५ । (ज) ऋ० ८, ४, १९ । (झ) ऋ० ८, ५, १ ।
(ञ) ऋ० ८, ५, ३० ।

आगन्त(क) मारुतं सूक्तं वय(ख)मित्यैन्द्रमुत्तरम्(१) ॥५७॥
काण्वस्य सौभरे(२)श्चैव यजतो वज्रे(३) सह ।
कुरुङ्गे यत्रान् जनुर्हवींषि विविधानि च ॥५८॥
आसुरस्त्व(४) सोऽभितुष्टाव इन्द्रश्चैव मरुत्सखौ ।
इन्द्रो वै(ग)त्यसमर्थां स दानमस्मि प्रकाशयन् ॥५९॥
आसुरराजोऽभिमानाच्च प्रदर्शितमना स्वयम्(५) ।
स स्तुतो(६) देववच्चैव(घ) ऋषये तु गवां ददौ(७) ॥६०॥
अयुतानां सहस्रं वै निर्जघान स्तवन्नृपि ।
ऋषिश्चोवाच(८) महात्मा नाहमर्हाम्यृषे स्तुतिम् ॥६१॥
तिर्यग्योनौ समुत्पन्नो(९) देवता(१०) स्तोतुमर्हसि ।

---

(१) वयमेन्द्रमत परमिति ख० ङ० पुस्तकान्तरेषु ।
(२) सौभरेरिति क० ग० घ० च० ।
(३) वज्रैरिति क० ख० च० ।
(४) आसङ्गः इति ख० ङ० पुस्तकान्तरेषु ।
(५) इन्द्रोवैत्यसमर्थां स इति श्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु नावलोक्यते ।
(६) सस्तुत इति ख० ग० ङ० पुस्तकान्तरेषु ।
(७) यद्ददौ तस्तुतेन चैव ङ० पुस्तकान्तरेषु ।
(८) प्रोवाचेति ख० ।
(९) समुद्भूत इति ख० ङ० पुस्तकान्तरेषु ।
(१०) देव मा इति ङ० ।

---

(क) ऋ० ८, २०, १ । (ख) ऋ० ८, २१, १ । (ग) ऋ० ८, २१, १७ ।
(घ) ऋ० ८, २१, १८ ।

तमन्वया पुनश्चाप्तौदोत्य(क) सूक्तेन चाश्विनौ(१) ॥६२॥
दृलि(ख)श्वेत्येतदाग्नेयं सखायश्वैन्द्रमुत्तरम्(२) ।
यथा वरः सुषाम्णे (ग)उत्तमश्चौषधस्तुच ॥६३॥
अष्टौ तु सहिता एता देवता विभिदुर्वशम् ।
उषाश्चेन्द्रश्च सोमश्चाथाग्निः सूर्यो बृहस्पतिः ॥६४॥
अङ्गिराः सरमा चैव ता वा(घ)मित्युत्तरस्य [illegible] ।
आदौ मैत्रावरुण्यस्तु(३) नव द्वादश तूत्तराः ॥६५॥
वैश्वदेव्यो बहुराजा यथादादृषये वसु ।
इन्द्रो वेत्येतयर्चा तु दानशक्तिप्रकाशनम्(४) ॥६६॥
कौर्त्तितं(५) तु ऋषे तस्मिन्नृच(ङ)मुचथ्यायने ।
अश्विनौ ददतुः प्रीतौ तदित्योकं सुषामणि(६)(च) ॥६७॥

---

(१) स्तुत्वा चित्र स्तुतौ यदैक्षिमिदिति क॰ घ॰ च॰ ।
(२) उत्तममिति ख॰ एतच्छ्लोकार्द्धं क॰ ग॰ घ॰ चिह्नितपुस्तकेषु न पठितम् । तेषु अस्मिन् स्थले, अश्विनावग्निमिन्द्रश्च चाभिष्टुत्याथ देवता । एतच्छ्लोकार्द्धं वर्त्तते ।
(३) मित्रावरुण्य इति ख॰ ङ॰ ।
(४) एतच्छ्लोकार्द्धं ख॰ ग॰ ङ॰ चिह्नितपुस्तकेषु नापश्याम ।
(५) कीर्त्तनमिति ङ॰ पुस्तकान्तरस्थ ।
(६) एतच्छ्लोकार्द्धं क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न विद्यते ।

---

(क) ऋ॰ ८, २२, १ । (ख) ऋ॰ ८, २४, १ । (ग) ऋ॰ ८, २४, २८ । (घ) ऋ॰ ८, २५, १ । (ङ) ८, २४, २२ । (च) ऋ॰ ८, २५, २२ ।

आश्विनं तु युवो(क) युंक्ष्व(ख) वायव्या उत्तरास्तु याः।
यं सवर्णंमनुर्नाम लेभे पुत्रं विवस्वतः ॥६८॥
वैश्वदेवानि पञ्चैतान्यग्निरुक्थे(ग) जगाद सः(१)।
बभ्रुरेक(घ) इति त्वस्मिंस्त्रिष्टुतो(२) द्विपदा दश ॥६९॥
स्तूयन्ते देवता ह्यासु कर्मभिः(३) स्वैः पृथक् पृथक्।
स्तुताः कर्मगुणैः स्वैः स्वैर्देवता यत्र यत्र तु ॥७०॥
पृथक् कर्मस्तुतिर्नाम वैश्वदेवस्तदेव तु(४)।
तासामृभुरिति त्वाद्या सौम्याग्नेयी त्वनुत्तरा ॥७१॥
त्वाष्ट्री चैन्द्री ■ रौद्री च पौष्णी वैष्णव्यृगाश्विनी।
नवमी मैत्रावरुण्यृग्दशमी मित्रसंस्तवा ॥७२॥
यजमानप्रसङ्गाच्च यजिरेवात्र संस्तुता।
यो यजाति(ङ) द्वृचे शक्रो यजतां पतिरीक्षितः ॥७३॥
तस्य द्युमान्(च) द्वृचे यज्वा पत्नस्त्वपि मच्छि(छ)ति।

(१) वैश्वदेवानि सूक्तानि जगादाग्निरिति स्वयमिति क० घ० च०।
(२) त्वेता त्रिष्टुत इति ख० ■० ङ० पुस्तकान्तरञ्च।
(३) ह्यासां नवभिरिति क० घ० च०।
(४) पृथक् कर्मस्तुतेर्युक्तं तद्विधाद्वैश्वदेवतमिति ख० ङ० पुस्तकान्तरञ्च।

(क) ऋ० ८, २६, १। (ख) ऋ० ८, २६, २०। (ग) ऋ० ८, २७, १। (घ) ऋ० ८, २९, १। (ङ) ऋ० ८, ३१, १। (च) ऋ० ८, ३१, ३। (छ) ऋ० ८, ३१, १४।

यज्ञनोरेव दम्पत्योः पश्व या[क] दम्पतीत्यृचः ॥७४॥
आग्नमर्त्ता[ख]ग्नीरेतु[ग] पौष्णी परे मित्रार्यमा यथा[घ] ।
वरुणश्च सुनस्त्वच आदित्या अग्नि[ङ]मग्नये[१] ॥७५॥
सूक्तानि प्रहतानी[च]ति चौष्णैन्द्राणि पराण्यतः ।
अध[छ] इत्यच कन्या तं स्त्रीलिङ्गेनेन्द्रमब्रवीत् ॥७६॥
स हि तां कामयामास दानवीं पाकशासनः ।
ज्येष्ठां स्वसारं पुंसस्[२] तस्यैव वधकाम्यया[३] ॥७७॥
अग्निने[ज]त्याग्निनं सूक्तमैन्द्रे सूक्ते परे ततः ।
ऐन्द्राग्न्यात् परमाग्नेयमैन्द्राग्न्यादारुणे[४] परे ॥७८॥
उत्तरे वरुणे लम्य आ वा[झ]मित्याश्विनसृचः ।
सूक्ते इमे[ञ] समाग्नेये[५] ताभ्यामैन्द्रे ततः परे[६] ॥७९॥

---

(१) यो यजाति इषे ग्राम इत्यादिसार्द्धश्लोकद्वयं क० ग० घ० च० चिह्नित-पुस्तकेषु नायस्ति ।
(२) प्युतस्येति क० घ० च०, थ्यंसस्येति ख० पुस्तकान्तरञ्च।
(३) युवकाम्ययेति ख० ग० ङ० पुस्तकान्तरञ्च ।
(४) ऐन्द्राग्नं परमाग्नेयमैन्द्राग्नं वारुणे इति क० घ० च० । वारुणे इत्यत्र वारुणमिति ग० ।
(५) इमे तु चाग्नेये इति क० घ० च० ।
(६) ताभ्य मैन्द्रेति चोत्तरे इति क० ग० घ० च० ।

---

(क) ऋ० ८, ३१, ५ । (ख) ऋ० ८, ३१, १० । (ग) ऋ० ८, ३१, ११ । (घ) ऋ० ८, ३१, १३ । (ङ) ऋ० ८, ३१, १४ । (च) ऋ० ८, ३२, १ । (छ) ऋ० ८, ३३, १९ । (ज) ऋ० ८, ३५, १ । (झ) ऋ० ८, ४२, ४ । (ञ) ऋ० ८, ४३, १ ।

यथायाख्याय[1]यत्[2]प्रादात्कानीनस्तु पृथुश्रवा ।
तदृच स्तुत दानमाह[क] इत्येवमादिभि[3] ॥८०॥
प्रान[ख] प्रगाथो वायव्य सूक्तस्योपोत्तमा च या ।
भिक्षार्थमागतौ मरुत सुनीथोच[ग]द्वे स्तुता ॥८१॥
द्विषत्वारिम्मकाम्मीत[4] स्त्रिम्नोकाय पुरन्दर ।
गिरिं निहत्य वज्रेण गा ददावसुरैर्हृता ॥८२॥
य[घ] इमादिति चैतस्मादृषिस्तु स्वयमब्रवीत्[5] ।
स्तुता नवम्या त्वदितिर्मही[ङ]त्यादित्यदेवते[6] ॥८३॥
अन्या पञ्चोपषेऽपि तु सौम्य स्वाद्वो[च]रिति स्तुतम् ।
परात्वष्टौ तु[7] सूक्तानि चयोपा तिग्मतेजषाम् ॥८४॥

---

(१) यथायाख्यायेति घ॰ ।
(२) यथान्याय ययदिति ङ॰ ।
(३) आदिनेति ख॰ ङ॰ पुस्तकान्तरेषु ।
(४) प्रात इति ङ॰ पुस्तकान्तरेषु ।
(५) भिक्षार्थमागतौ मरुत इत्यादि ऋषिस्तु स्वयमब्रवीदित्यन्तपाठ क॰ ग॰ घ॰ च॰ लिखितपुस्तकेषु नेष्यते ।
(६) चापीति क॰ घ॰ च॰ ।
(७) पराणि चाष्टाविति ख॰ ङ॰ पुस्तकान्तरेषु ।

---

(क) ऋ॰ ८, ४६, २१ । (ख) ऋ॰ ८, ४६, २५ । (ग) ऋ॰ ८, ४६, ३ । (घ) ऋ॰ ८, ४६, २० । (ङ) ऋ॰ ८, ४७, ९ । (च) ऋ॰ ८, ४८, १ ।

ऐन्द्राग्न्यभि[क] तु पञ्चिंशः प्रगाथो बहुदैवतः ।
ऋगन्त्याग्नेरचेत्य[ख]ग्निः सूर्य्यमन्त्यपदा[१] जगौ[२] ॥८५॥
प्रस्कण्वस्य पृषध्रस्य[३] प्रादाद्यद्वसु किञ्चन ।
तदूर्द्ध्वा[ग]दिति सूक्ताभ्यामखिलन्त्विह संस्तुतम्[४] ॥८६॥
ऐन्द्राग्न्युभय[घ]मित्यच षडाग्नेयात् पराणि तु[५] ।
निपातमाह[६] देवानां दाता म[ङ] इति भागुरिः ॥८७॥
ऋचे[७]यास्कस्त्वेतं[८] मन्यते वैश्वदेवतं ।
आदित्यदैवतं सूक्तं त्यान्न्वि[च]त्यच परन्तु यत् ॥८८॥
धीवराः सहसा मीनान् दृष्ट्वा सारस्वते जले ।

---

(१) अन्त्यं पदमिति ङ० पुस्तकान्तरञ्च ।

(२) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते । तेषु अस्मिन् स्थले, अचेत्यग्निरिति तस्यास्ततोऽग्निः सूर्य्यं एव तु । इति श्लोकार्द्धमस्ति ।

(३) त्विति ङ० ।

(४) परिकीर्त्तितमिति ख० ङ० पुस्तकान्तरञ्च ।

(५) श्लोकार्द्धमेतद् ख० ङ० चिह्नितपुस्तकयोर्न विद्यते ।

(६) निपातानाहेति ग०, निपातेनेहेति ङ० पुस्तकान्तरञ्च ।

(७) ऋचमिति ग० ।

(८) यास्कोऽस्मेऽर्द्धं स्वयं चैनमिति ङ० ।

---

(क) ऋ० ८, ४९, १ । (ख) ऋ० ८, ५६, ५ । (ग) ऋ० ८, ५५, १ । (घ) ऋ० ८, ६१, १ । (ङ) ऋ० ८, ६५, १० । (च) ऋ० ८, ६०, १ ।

जालं प्रक्षिप्य तान् बद्धोदक्षिपन् सलिलात् स्थलम् ॥८९॥
शरीरपातभीतास्ते तुष्टुवुश्चादितेः सुतान् ।
मुमुचुस्तांस्ततस्ते च प्रसन्नास्तान् समूदिरे ॥९०॥
धीवरा सुनुध्व मा वो भूत्स्वर्गं प्राप्स्यथेति च[१] ।
उते[क]ति माता चैवैषा तृचेनाभिष्टुतादितिः ॥९१॥
मातृत्वाद्गर्भसम्बन्धात्[२] स्तूयेतेवा[३] सुतौ स्तुतौ ।
ऐन्द्राग्न्या त्वा रथ[ख] चौथि स्तौत्यृद्धुपसे[ग]ति षट् ॥९२॥
आर्क्षाश्वमेधयोश्च पञ्चदानस्तुति परा ।
अपा[घ]दिन्द्रस्य चाग्नेश्च विशेषां चैव यत्तव ॥९३॥
तृचस्य प्रथमोऽर्द्धर्चे प्रैषा वरुणदेवता[४] ।
स्व[ङ]नाग्नेयेऽप वा सूक्ते उत्तरे[५] हविषां स्तुति ॥९४॥
पय पञ्चौषधीनाञ्च[६] तथा रूप हि दृश्यते ।

---

(१) धीवरा सहसा मीनानित्यादि सार्द्धश्लोकद्वय क० ग० घ० च० चिह्नितपुस्तकेषु नापद्यत ।

(२) मातृत्वादतिसम्बन्धादिति क० च०, मातृत्वादभिसम्बन्धादिति ग० मातृत्वादिति सम्बन्धादिति घ० ।

(३) स्तूयन्तेनामिति ख० ङ० पुस्तकान्तरञ्च ।

(४) प्रैषो वरुणदैवत इति ख० ग० ङ० ।

(५) उत्तममुत्तरमिति क० ग० घ० च० ।

(६) चेति ख० ङ० ।

---

(क) ऋ० ८, ६७ १० । (ख) ऋ० ८, ६८, १ । (ग) ऋ० ८, ६८, १४ । (घ) ऋ० ८, ६९, ११ । (ङ) ऋ० ८, ७१, १ ।

उ(क)दित्याश्विनमाग्नेये परे सूक्ते विभो विभु(ख) ॥८५॥
अग्नाभ्यामह(ग)मिति द्वाभ्यां स्तौत्यात्मानमृषिः स्वयम् ।
आत्मानमात्मना स्तुत्वा स्तौति दानं श्रुतर्वणः ॥८६॥
आत्मादानाभिसम्बन्धात् परुष्णीञ्च महानदीम्(१) ।
परुष्णीं परया चेन्द्र(२) त्रिभिः सूक्तैरिम(घ)न्त्विति ॥८७॥
सोम्यस्त्वय(ङ)मित्यस्य पराण्यैन्द्राणि यानि तु ।
नही(च)ति तेषां प्रथमे(३) वैश्वदेव्यृगवीवृधत्(छ) ॥८८॥
देवाना(ज)मिति देवानामग्नेष्ठ(झ)माग्नेयमुत्तरम्(४) ।
*पौष्माश्विमानि सूक्तानि आ मे(ञ)ऐन्द्राणि त(ट) तथा(५)* ॥८९॥
अपालाऽत्रिसुता त्वासीत्कन्या त्वग्दोषिणी पुरा ।
तामिन्द्रश्चकमे दृष्ट्वा(६) विजने पितुराश्रमे ॥१००॥

---

(१) आत्मानमात्मना स्तुत्वेत्यादि परुष्णीञ्च महानदीमित्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु न पठितः ।
(२) परया परुष्णीमिन्द्रमिति क० ग० घ० च० ।
(३) प्रथममिति घ० पुस्तकान्तरञ्च ।
(४) आग्नेयन्तु तत परमिति क० घ० च० ।
(५) आम इति ऐन्द्राणि तमितोति चेति क० ग० घ० च० ।
(६) दृष्ट्वेति क० घ० च० ।

---

(क) ऋ० ८, ७३, १ । (ख) ऋ० ८, ७४, १ । (ग) ऋ० ८, ७४, १३ । (घ) ऋ० ८, ७६, १ । (ङ) ऋ० ८, ७९, १ । (च) ऋ० ८, ८०, १ । (छ) ऋ० ८, ८०, १० । (ज) ऋ० ८, ८३, १ । (झ) ऋ० ८, ८४, १ । (ञ) ऋ० ८, ८५, १ । (ट) ऋ० ८, ८८, १ ।

तपसा बुबुधे सा [illegible] सर्व्वमिन्द्रचिकीर्षितम् ।
उदकुम्भं समादाय अपामर्थे जगाम सा(१) ॥१०१॥
दृष्ट्वा सोममपादास्ये तुष्टावर्चा वने तु तं ।
कन्या वा(क)रिति चैतस्यामेषोऽयं कथितः सुतः(२) ॥१०२॥
सा सुषाव मुखात् सोमं सुतेनेन्द्रश्चाजुहाव तं(३) ।
असौ य एषी(ख)त्यनया पपाविन्द्रस्तु तन्मुखात्(४) ॥१०३॥
अपूपांश्चैव सक्तूंश्च भक्षयित्वा तु तद्गृहात्(५) ।
ऋग्भिस्तुष्टाव सा चैनं जगादैनं वचेन तु(६) ॥१०४॥
सुलोमामनवद्याङ्गीं कुरु मां शक्र सुत्वचाम् ।
तस्यास्तद्वचनं श्रुत्वा प्रीतस्तेन पुरन्दर(७) ॥१०५॥
रथच्छिद्रेण तामिन्द्र शकटस्य युगस्य च ।

---

(१) क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु उदकुम्भं समादायेति श्लोकार्द्धं, अपूपांश्चैव सक्तूंश्चेति श्लोकार्द्धात्परतः पठितम् ।
(२) दृष्ट्वा सोममपादास्ये इत्यादि एषोऽयं कथितः सुत इत्यन्तपाठः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तके नोपलभ्यते ।
(३) पपाविन्द्रस्तु तन्मुखादिति क॰ ग॰ घ॰ च॰ ।
(४) एतच्छ्लोकार्द्धं क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न विद्यते ।
(५) शतक्रतुरिति ख॰ ङ॰ पुस्तकान्तरयोः ।
(६) असौ भूते वृषेन सेति ङ॰ पुस्तकान्तरयोः ।
(७) एतच्छ्लोकार्द्धं क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु नेष्यते ।

---

(क) ऋ॰ ८, ९१, १ । (ख) ऋ॰ ८, ९१, २ ।

प्रच्छिद्य निरकर्षत्त्वचः सुत्वक् सा तु ततोऽभवत्[1] ॥१०६॥
तस्यां त्वचि व्यपेतायां पूर्व्वस्यां शल्यकोऽ[2]भवत् ।
उत्तरा त्वभवद्गोधा कृकलासस्त्वुत्तमा ॥१०७॥
इतिहासमिमं[3] सूक्तं त्वाहतुर्यास्कमाठरौ[4] ।
कन्ये[क]ति शौनकः सूक्ते पान्त[ख]मैन्द्रे ततः परे[5] ॥१०८॥
उत्तमा चार्भवी प्रोक्ता उत्तरस्त्वैतरेयके ।
छान्दोगिके तृतीये तदार्भवं शस्यते यतः[6] ॥१०९॥
मारुतं गौः[ग] परं सूक्तमा त्वै[घ]न्द्राणि[7] पराणि षट् ।
सूक्ते द्वितीय एतेषामितिहासं प्रचक्षते[8] ॥११०॥

---

(१) तत. सा सुत्वचाभवदिति ख० पुस्तकान्तरञ्च ।
(२) तस्यास्त्वच्यपेतायाः पूर्वा सा शल्यक इति क० ग० घ० च० ।
(३) इदमिति क० ग० घ० च० ।
(४) यास्कमागुरिरिति क० ग० घ० च० यास्कगालवाविति ख० पुस्तकान्तरञ्च ।
(५) शौनकस्त्वैन्द्रं यास्तमिन्द्युत्तरे च ये इति क० ।
(६) उत्तमा चार्भवीत्यादिश्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु नापश्यत ।
(७) त्वात्वैन्द्राणीति क० ग० घ० च० ।
(८) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु नेक्ष्यते ।

---

(क) ऋ० ८, ९१, १ । (ख) ऋ० ८, ९२, १ । (ग) ऋ० ८, ९४, १ । (घ) ऋ० ८, ९५, १ ।

अपक्रम्य तु(१) देवेभ्य सोमो वृत्रभयार्दित ।
नदीमंशुमतीनाम्नीमभ्यतिष्ठत् कुरून्(२) प्रति ॥१११॥
त बृहस्पतिरेकेन अभ्यपा(३)द्वृत्रहा सह ।
योत्स्यमान सुसंहृष्टै(४)र्मरुद्भिर्विविधायुधै ॥११२॥
दृष्ट्वा तानायत सोम स्वबलेन व्यवस्थित ।
मन्वानो वृत्रमायान्त(५) जिघांसुमरिसेनया ॥११३॥
व्यवस्थित धनुष्मन्त तमुवाच बृहस्पति ।
मरुत्पतिरय सोम एहि(६) देवान्(७) पुनर्विभो ॥११४॥
श्रुत्वा देवगुरोर्वाक्यमनर्थं वृत्रशङ्कया(८) ।
सोऽब्रवीन्नेति तं शक्र ओजसैव(९) बलाहवी ॥११५॥

---

(१) अपचक्रामेति ख० ट० पुस्तकान्तरञ्च ।
(२) अंशुमती नामा अभ्यतिष्ठद्युरूनिति क० ग० घ० च०, अभ्यति
ष्ठत् कुरूनिति ख० ट०।
(३) अभ्ययादिति पाठ साधुः। वृत्रान्वयादिति ख० पुस्तकान्तरञ्च ।
(४) योत्स्यमानश्च सहृष्टैरिति क० घ० च० ।
(५) दृष्ट्वा तानायतास्सोम स्वबलेन व्यवस्थितम् । मन्वान पुत्रमायान्त
मिति क० घ० च० ।
(६) मरुत्पतिरय सोममेहीति क० ग० घ० च० ।
(७ देवेति पाठ समीचीन ।
(८) श्लोकार्द्धमेतत् क० ग० घ० च० चिह्नितपुस्तकेषु न विद्यते ।
(९) मर्मं एवेति क० घ० च० ।

इयाय देवानायन्तं[१] तं यपुर्विविधवस्सुराः ।
जघ्नुः पीत्वा च दैत्यानां समरे[२] नवतीर्नव ॥११६॥
तदेतदय्यवद्रूप[३](क)सूक्ते सर्व्वं निगद्यते ।
ऋचस्य देवता तस्य[४] इन्द्रमेवाह शौनकः ॥११७॥
ऐन्द्रावार्हस्पत्य ऊक्ता ब्राह्मणे त्वैतरेयके[५] ।
ऋचेनेन्द्रमपश्यन् तं [६]नेमोऽय[७]मिति भार्गवः ॥११८॥
तुष्टावेन्द्रो वृषेनाय(ग)मद्यं पश्य च मामृये ।
स हि स्तुवन्नेव एको नेन्द्रा[७] अस्तीति चाब्रवीत् ॥११९॥
तदाकर्ण्येन्द्र आत्मानमृग्भ्यां तुष्टाव दर्शयन्[८] ।

---

(१) आदायेति क॰ ग॰ घ॰ च॰ ।
(२) इतदा इति क॰ घ॰ च॰ ।
(३) तदेतदपि यतस्मिन्निति क॰ ग॰ च॰ ।
(४) देवता होता इति ख॰ ग॰ ङ॰ पुस्तकान्तरच ।
(५) श्लोकार्द्धमेतत् क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न दृश्यते ।
(६) यदृश्यन्तमिति क॰ घ॰ च॰,ऐन्द्रमपश्यन् तमिति ख॰ पुस्तकान्तरच ।
(७) इन्द्रः इति पाठः साधुः ।
(८) स हि स्तुवन्नेव एक इत्यादि ऋग्भ्यां तुष्टाव दर्शयन्नित्यन्तपाठः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न पठितः ।

---

(क) ऋ॰ ८, ९९, १३ । (ख) ऋ॰ ८, १००, ३ । (ग) ऋ॰ ८, १००, ४ ।

ऋषिस्तु दृष्ट्वा[१] सुप्रीतो विश्वेत्तात [क]इति तृचे ॥१२०॥
विविधानि च कर्म्माणि दानमैन्द्रस्य शंसति ।
मनोजवा[ख]स्तु सौपर्णी[२] समुद्रे[ग] वज्रसंस्तवः ॥१२१॥
वाचं सर्व्वगतां देवीं[घ] स्तौति यद्वा[ङ]गिति तृचे ।
त्रींल्लोकानभितप्येमान्[३] वृत्रस्तस्थौ स्वयं त्विषा ॥१२२॥
तं नाशकं हन्तुमिन्द्रो विष्णुमभ्येत्य सोऽब्रवीत् ।
वृत्रं हनिष्ये तिष्ठस्व विक्रम्याद्य[४] ममान्तिके ॥१२३॥
उद्यतस्य तु[५] वज्रस्य द्यौर्ददातु[६] ममान्तरम् ।
तथेति विष्णुस्तच्चक्रे द्यौस्तस्य विवरन्ददौ ॥१२४॥
तदेतदखिलं प्रोक्तं विष्णविति सखे[च]तृचि[७] ।

---

(१) तं दृष्ट्वेति ख० ग० पुस्तकान्तरेषु ।
(२) सौपर्णीति ख० ग० ।
(३) अभितप्येमानिति ख० ग० पुस्तकान्तरेषु ।
(४) वृत्रं हनावविक्रम्य तिष्ठस्वाद्येति ख० ग० पुस्तकान्तरेषु ।
(५) उद्यतस्येति क० ख० ग० ।
(६) ददात्विति क० ख० ग० ।
(७) यच्चंमभिक्षोर्ह सखीमृचीति क० ग० घ० ङ० ।

(क) ऋ० ८, १००, ६ । (ख) ऋ० ८, १००, ८ । (ग) ऋ० ८, १००, ९ । (घ) ऋ० ८, १००, ११ । (ङ) ऋ० ८, १००, १० । (च) ऋ० ८, १००, १२ ।

मैत्रावरुण्यः सूक्तायाद्यतस्त्वृध[क]मित्यृचः ॥१२५॥
प्रे[ख]ति मित्राय वा पादाद्यार्यम्णो(१) वरुणस्य च।
नय[ग]श्चतुर्थः सर्वेषामादित्यानामिति स्तुतिः ॥१२६॥
परा त्वादित्यदेवत्या(२) आम[घ] इत्याश्विनो तृचः(३)।
वायव्ये चोत्तरे सौर्यं औषसी तृगियं[ङ] परा(४) ॥१२७॥
पावमानी प्रजा हे[च]ति माते[छ]त्युग्भ्यास्तु गौः स्तुता।
तमग्ने वृह[ज]दाग्नेये परेऽग्निस्तृचि संस्तुतः ॥१२८॥
मरुद्भिः सह रुद्रेण आग्ने याही[झ]ति मध्यमः।
प्रजा हे[ञ]त्यपि वाङ्कूर्वे प्रथमेऽग्निरिहोच्यते ॥१२९॥
पादे तृतीये आदित्य स्तुरीये मध्यमः स्तुतः।

---

(१) मित्राय पादस्य चार्यम्णः इति क० ख० ग० घ०।
(२) ऋच आदित्यदेवत्या इति ङ० पुस्तकान्तरञ्च।
(३) तृच इति ग०।
(४) सौर्यं औषस्या प्रभा वा चन्द्रसूर्ययोरिति ख० ङ० पुस्तकान्तरञ्च। औषस्या इत्यत्र उषसेति ग०।

---

(क) ऋ० ८, १०१, १। (ख) ऋ० ८, १०१, ५। (ग) ऋ० ८, १०१, ४। (घ) ऋ० ८, १०१, ७। (ङ) ऋ० ८, १०१, १३। (च) ऋ० ८, १०१, १४। (छ) ऋ० ८, १०१, १५। (ज) ऋ० ८, १०२, १। (झ) ऋ० ८, १०२, १४। (ञ) ऋ० ८, १०२, १४।

रहस्ये ब्राह्मणेऽप्येवं व्याख्यातं ह्यैतरेयके[1] ॥१२०॥
पावमानः स्तुतः सोमो नवमे त्विह मण्डले[2]।
पवमानवदाग्नेयस्तु[3] समिद्धः[क] इति संस्तुतः ॥१२१॥
अग्न आयूंषी[ख]ति पाद्य तिसृष्वग्निर्निपातभाक्।
अविता न[ग] इति त्वस्मिंस्तृचे पूष्णा[4] सह स्तुतः ॥१२२॥
आग्नेय्यौ द्वे स्वपावक यस्त[घ] इत्युत्तरे ततः।
उभाभ्या[ङ]मिति सावित्री अग्निसावित्र्य[5]उत्तरा ॥१२३॥
पुनन्तु मा[च] वैश्वदेवी आग्नेयी त्वृगुपप्रियम्[छ]।
षडुत्तरा[6] य[ज] इत्यत्र[7] स्वाध्यायाध्येतृसंस्तवः ॥१२४॥

---

(१) प्रजा हेत्यपि यार्द्धवें इत्यादिश्लोकार्द्धं क० ग० घ० च० चिह्नित-पुस्तकेषु न विद्यते।
(२) नवमे मण्डलेऽर्षिभिरिति क० घ० च०, मण्डलर्षिभिरिति ग०।
(३) पवमानवदाग्नेय' इति ख०।
(४) पूष्णेति ख० ङ० पुस्तकान्तरञ्च।
(५) चाग्न्यासावित्रीति ख०।
(६) षडोत्तरा इति [illegible]० ङ० पुस्तकान्तरञ्च।
(७) उत्तरे च य इत्येवेति ग०।

---

(क) ऋ० ९, ५, १। (ख) ऋ० ९, ६६, १९। (ग) ऋ० ९,६७,२०। (घ) ऋ० ९, ६७, २१। (ङ) ऋ० ९, ६७, २५। (च) ऋ० ९, ६७, २७। (छ) ऋ० ९, ६७, २९। (ज) ऋ० ९, ६७, ३१।

सूक्ते निरुक्ते सूक्ते[क]ऽग्नि रक्षोहा घर्मसंस्तवः[१] ।
सूर्य्यवर्चात्मवर्चाव[२] पवित्र[ख]मिति चोच्यते ॥१२५॥
आर्भवस्तु भवेत्पाद ऋभुर्धीर[ग] इति स्मृतः ।
निपातैस्तु त्रिभिः पादैस्त्रयो देवा इहोदिताः[३] ॥१२६॥
मह्या देवानां तिस्रोकास्त्रिभिस्त्वेतैर्हृचैस्त्वृचे.[४] ।
सूर्य्यवर्चात्मवर्चायं[५] स्तूयते सोम[घ] इत्यपि[६] ॥१२७॥
अनादृत्यां तु वर्त्तन्यां पप्रच्छर्षीञ्छचीपतिः ।
काले दुर्गे महत्यस्मिन् कर्म्मणा केन जीव्यथ ॥१२८॥
शकटं शाकिनी गावः कृषिरस्यन्दनं वनं[७] ।
समुद्रः पर्व्वतो राजा एवं जीवामहे वयम् ॥१२९॥
अथ स्तुवन्[८] शशंसास्य ऋषिराङ्गिरसः शिशुः ।

---

(१) एतच्छ्लोकार्द्धं ङ० चिह्नितपुस्तके न पठितम् ।
(२) सूर्य्यवर्चात्मवर्चायेति क० घ० च० ।
(३) एष श्लोक क० ग० घ० च० चिह्नितपुस्तकेषु नेष्यते ।
(४) हृचाहृचैरिति क० ग० घ० च० ।
(५) सूर्य्यवर्चात्मवर्चामीति क० घ० च० ।
(६) एव वेति क० ग० घ० च० ।
(७) अरस्य मन्दनन्दनमिति ख० । एष श्लोक क० ग० घ० च० चिह्नितपुस्तकेषु नापठ्यत ।
(८) स्तुवन्नेवेति क० ग० घ० च० ।

---

(क) ऋ० ९, ७३, १ । (ख) ऋ० ९, ८३, १ । (ग) ऋ० ९, ८७, ३ । (घ) ऋ० ९, १०७, ७ ।

नानानीयेन(क) सूक्तेन ह्यृषीणामेव(१) सन्निधौ ॥१४०॥
तानिन्द्रः प्राब्रवीत् सर्व्वां(२)स्तपध्वं सुमहत्तपः ।
नातप्ततपसः शक्यमिदं(३) कृत्स्नं व्यपोहितुं ॥१४१॥
अथ ते वै तपस्तेपुः सर्व्वे स्वर्गजिगीषवः ।
ततस्ते तपसार्षेण पावमानीर्ददृशोऽब्रुवन् ॥१४२॥
अनसूयुरधीयानः शुश्रूषुस्तपसान्वितः ।
दश पूर्व्वापरान् वंश्यान् पुनात्यात्मानमेव च ॥१४३॥
पापं यच्च(४)करोत्किञ्चिन्मनोवाग्देहभोजनैः(५) ।
पूतः स तस्मात् सर्व्वस्मात् स्वाध्यायफलमश्नुते(६) ॥१४४॥
पावमान्यः परं ब्रह्म शुक्रं ज्योतिः सनातनं(७) ।
गायत्र्योऽन्तेऽथ पद्यानां प्राणायामस्य तन्मनाः(८) ॥१४५॥
पावमानं पितॄन् देवान् ध्यायेद्यश्च सरस्वतीम् ।

---

(१) हृषीति ख० ङ० पुस्तकान्तरयोः ।
(२) तांश्च सर्व्वानिति क० ग० घ० च० ।
(३) न ह्यतप्ततपसा शक्यं विनेति क० ग० घ० च० ।
(४) यच्चेति ख० ङ० पुस्तकान्तरयोः ।
(५) मनोवाग्देहतो धनैरिति क० घ० च०, मनोवाग्देहतो धनैरिति ग० ।
(६) स्वाध्यायफलमाप्नुयादिति ख० ङ० पुस्तकान्तरयोः ।
(७) ज्योतिरध्यात्ममिति क० घ० च० ।
(८) अत्र श्लोकः ख० ङ० पुस्तकयोर्न विद्यते ।

---

(क) ऋ० ९, ११२, १ ।

पितॄंस्तस्योपवर्तेत(१) क्षीरं सर्पिर्मधूदकम् ॥१४६॥
एतत् सूक्तं शतं सौम्यं मण्डलं सचतुर्दशम् ।
पावमान(२)मिति ख्यातमनुवाकास्तु सप्त वै(३) ॥१४७॥
सप्ताग्नेयानि सूक्तानि ददर्शाग्र इति श्रितः ।
प्रकेतुने(क)ति त्वाद्यस्तु त्रिशिराः सूक्तमुत्तरम् ॥१४८॥
अपश्यत्स(४) पञ्चाग्नेय्यसृत्वष्टुस्त्वस्ये(ख)ति(५) यः परः ।
तेनेन्द्रमभितुष्टाव स्वशाक्त इति नः(६) श्रुतिः ॥१४९॥
अभवत्स हि(७) देवानां पुरोधाः प्रियकाम्यया(८) ।
असुराणां स्वसुः पुत्रस्त्रिशिरा विश्वरूपभृत् ॥१५०॥
तमृषिं प्रहित(९)न्त्विन्द्रो देवेषु बुबुधेऽसुरैः ।

---

(१) उपतिष्ठेतेति ख० पुस्तकान्तरञ्च ।
(२) शीलमात्रमिति ख० ।
(३) एष श्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते ।
(४) तस्येति ख० ।
(५) त्वचस्यास्येतीति ख० ।
(६) न श्रुतिरिति क० घ० च०, श्रुतमिति ख०, पुस्तकान्तरञ्च । एष श्लोकः ग० चिह्नितपुस्तके न पठितः ।
(७) स ह्येति ख० ख० ।
(८) प्रियकाम्येति ख० ख० पुस्तकान्तरञ्च ।
(९) तं मृजन् प्रहितः इति क० घ० च० । प्रहित इति ग० ।

---

(क) ऋ० १०, ८, १ । (ख) ऋ० १०, ८, ७ ।

सोऽस्य वज्रेण तान्याशु(१) शिरांसि त्रीण्यचिच्छिदत्(२) ॥१५१॥
तस्य यत्सोमपानन्तु मुखं सोऽभूत् कपिञ्जलः ।
कलविङ्कः सुरापानमन्नाद् तित्तिरि(३)स्त्वभूत् ॥१५२॥
तं वागभ्यवदद्ब्राह्मी(४) मध्यमानि शतक्रतो ।
प्रपन्नं हतवान् यस्माद्(५) विश्वरूपं पराङ्मुखम् ॥१५३॥
समभ्यषिञ्चत् सूक्तेन ऋषि(६)स्त्राप(क) इति स्वयम् ।
सिन्धुद्वीपोपनुत्यर्थं तस्माच्छीलस्य पाप्मन ॥१५४॥
मैथुनार्थमभीप्सन्ती प्रत्याचष्टे यमी यम ।
ओ चित् सखाय(ख)(७) संवादो(८) विवस्वत्तु तयोस्तयो ॥१५५॥
इन्द्रा(ग)ग्नेये हविर्धाने युजे वा(घ)मर्च(९) मन्यते ।
परेयिवांस(ङ)मित्यत्र स्तूयते मध्यमो यम(१०) ॥१५६॥

---

(१) सोऽस्य वज्रेण तस्याशु इति ख० ग० घ० ।
(२) तान्याशु शिरांसि सोऽप्यचिच्छिददिति ग०। शिरांस्येवाच्छिनत् प्रभु इति घ० पुस्तकान्तरञ्च ।
(३) तित्तिरः इति ख० ग० पुस्तकान्तरञ्च ।
(४) गौरिति ख० ग० घ० ।
(५) यत्नमिति क० ख० घ० ।
(६) ऋषिरिति क० ग० ख० घ० ।
(७) तयोर्विवदितेति क० ग० ख० घ० ।
(८) सखाय इति क० ख० घ० ।
(९) तुल्यत्वेनेति क० ग० ख० घ० ।
(१०) इत्येतस्मिन् सूक्ते स्तूयमान इति क० ख० घ० ।

(क) ऋ० १०, ९, १ । (ख) ऋ० १०, १० १ । (ग) ऋ० १०,१२, १ ।
(घ) ऋ० १०,१३ १ । (ङ) ऋ० १०, १४, १ ।

अथर्वाणोऽथ भृगवः पितरोऽङ्गिरस[क]श्च ह ।
सख्या देवगणास्तत्र संस्तूयन्ते शुभक्रियः ॥१५७॥
पितृभिश्चाङ्गिरोभिश्च संस्तुतो दृश्यते यमः ।
मन्त्रेषु चक्षुः पादे विवस्वन्तं पिता हि सः ॥१५८॥
संस्कार्य्यप्रेतमयुङ्क्ते पितृभिः स्तूयते यमः ।
प्रेहि प्रेही[ख]ति तिसृषु प्रेताशिष उदाहृताः ॥१५९॥
पितॄणां हि पतिर्देवो यमस्तस्मात् स सूक्तभाक्[१] ।
अतिद्रव[ग]त्यृचे श्वानौ परं पित्र्यमुदीरितम्[२] ॥१६०॥
परेयिव[३] तु सूक्तेन श्मशाने कर्म्म शंसति[४] ।
पितृदेवासुराणाञ्च प्रभवश्चाप्ययश्च यः ॥१६१॥
हव्यकव्यवहौ चोभौ सह रक्षोग्निना सह[५] ।
तत्र मैन[घ]मिति त्वेतमृक्कव्यवाहनसंस्तुतिः[६] ॥१६२॥

---

(१) अथर्वाणोऽथ भृगव इत्यादिसार्द्धश्लोकत्रयं क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु नोपलभ्यते ।
(२) उदीरितामिति क॰ ग॰ घ॰ च॰ ।
(३) उत्तरेणेति ग॰ ।
(४) एतच्छ्लोकार्द्धं ख॰ ङ॰ चिह्नितपुस्तकयोर्न पठितम् ।
(५) सहरक्षा च नामथ इति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(६) त्वाह कव्यवाहनमेवचेति ख॰ ङ॰ पुस्तकान्तरञ्च ।

---

(क) ऋ॰ १०, १४, ६ । (ख) ऋ॰ १०, १४, ७ । (ग) ऋ॰ १०, १४, १० ।
(घ) ऋ॰ १०, १६, १ ।

# अथ सप्तमोऽध्यायः ।



दृष्ट्वा[१] भर्तुः परोक्षन्तु सरण्यूः सवर्णां स्त्रियम् ।
निक्षिप्य मिथुनं[२] तस्यामश्वा भूत्वापचक्रमे[३] ॥१॥
अविज्ञानाद्विवस्वांस्तु तस्यामजनयन्मनुम् ।
राजर्षिरभवत् सोऽपि[४] विवस्वानिव तेजसा ॥२॥
स विज्ञाय[५] त्वपक्रान्तां सरण्यूमश्वरूपिणीम् ।
त्वाष्ट्रीं प्रति जगामाशु वाजी भूत्वा सलक्षणः[६] ॥३॥
सरण्यूश्च[७] विवस्वन्तं विदित्वा[८] हयरूपिणम्[९] ।

---

(१) दृष्ट्वेति क० ख० घ० ।
(२) मैथुनमिति पाठ साधु ।
(३) अश्वा भूत्वोपचक्रमे इति क० ख० घ० ।
(४) राजर्षिरासीत् स मनुरिति ख० ङ० पुस्तकान्तरञ्च ।
(५) विज्ञाप्येति ग० ।
(६) सलक्षण इति क० ख० घ०, स्वलक्षणः इति ग० ।
(७) समिति ख० ङ० पुस्तकान्तरञ्च ।
(८) विज्ञायेति ख० ङ० पुस्तकान्तरञ्च ।
(९) हरिरूपिणमिति पुस्तकान्तरम् ।

मैथुनायोपचक्राम[1] तां च तत्रारुरोह सः ॥४॥
ततस्तयोस्तु वेगेन शुक्रं तदपतद्भुवि ।
उपाजिघ्रच्च[2] सा त्वश्वा तच्छुक्रं गर्भकाम्यया ॥५॥
आघ्रातमात्राच्छुक्रात्तु कुमारौ संबभूवतुः ।
नासत्यश्चैव दस्रश्च यौ स्तुतावश्विनाविति[3] ॥६॥
इतिहासमिमं यास्कः सरण्यूदेवते तृचे[4] ।
विवस्वतश्च त्वष्टुश्च त्वष्टे[क]ति सह मन्यते ॥७॥
पूषे[ख]ति पादौ पौष्णौ द्वौ आग्नेया[5]वुत्तरौ तु यौ ।
स्यात्तृतीयोऽपि वा पौष्णस्तिस्रस्त्वन्याः परास्तु याः[6] ॥८॥
अपां स्तुतिस्त्वृगेका[7] त्वथा सारस्वतात्परा ।
स्तुतः परोक्षः सोमस्तु द्रप्स[ग] इत्युत्तरे तृचे ॥९॥
अब्देवताशीर्वादो[8] वा पयस्वत्यु[घ]त्तरा तु या ।

---

(१) मिथुनायोपचक्रामेति ख० ङ० पुस्तकान्तरञ्च ।
(२) उपाजिघ्रतीति क० ग० घ० ।
(३) यौ तु तौ वाजिनावितीति क० ग० घ० ।
(४) त्वचाविति क० ख० घ०, तृचे इति ङ० पुस्तकान्तरञ्च ।
(५) द्वावाग्नेयाविति ङ० पुस्तकान्तरञ्च ।
(६) पौष्णस्तस्यापरस्तृच इति ख० ङ० पुस्तकान्तरञ्च ।
(७) अपां स्तुति स्तुतिस्त्वेकेति ख०, अपां स्तुतिस्तुतस्त्वेकेति ङ० पुस्तकान्तरञ्च ।
(८) अब्देवत्याशीर्वाद इति ख० ङ०, पुस्तकान्तरञ्च ।

---

(क) ऋ० १०, १७, १ । (ख) ऋ० १०, १७, ३ । (ग) ऋ० १०, १७, ११ ।
(घ) ऋ० १०, १७, १४ ।

पतस्रस्ताः स्मृतिर्स्त्यो(क)रन्ते क्षिप्रास्त्र(१) कर्मणि ॥१०॥
मृतशिष्टेभ्य आगासु इमे(ख) ज्योग्जीवनं पुनः।
इमं जीवेभ्य(ग) आगासे तेभ्यः परिधिकर्मणि(२) ॥११॥
यथा(घ) धान्युत्तरा लाङ्गी ततो यान्या इमा(ङ)स्त्विति(३)।
स्त्रीणामग्निपमागासे तथैवाञ्जनकर्मणि(४) ॥१२॥
उदीर्ष्व नारीत्यनया मृत(च)पत्नी तु रोदती(५)।
भ्राता कनीयान् प्रेतस्य निगदात्(६) प्रतिषेधति ॥१३॥
कुर्य्यादेतत् कर्म्म होता देवरो न भवेद्यदि।
प्रेतानुगमनं न स्यादिति ब्राह्मणशासनात् ॥१४॥
वर्णानामितरेषाञ्च स्त्रीधर्म्मोऽयं भवेन्न वा(७)।
शान्त्यर्थं धनुरादाने प्रेतस्यर्च धनु(छ)र्जपेत्(८) ॥१५॥

---

(१) त्विति ख०।
(२) एष श्लोक क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते।
(३) यथधान्युत्तरलाङ्गी ततो यान्या इमात्विसीति ख० छ० पुस्तका न्तरञ्च।
(४) तथा परिधिकर्म्मणीति क० ग० घ० च०।
(५) मृतं पतमनुरोदतीति पाठः साधुः। मृतमन्वारोदतीति क० घ० च०।
(६) निगतेति क० घ० च०, निगात्वेति ग०।
(७) कुर्य्यादेतत् कर्म्म होतेति सार्द्धश्लोक क० ग० घ० च० चिह्नित-पुस्तकेषु नासाद्यत।
(८) शान्त्यर्थं च जपयस्ता, धनुरित्युत्तरामृचमिति क० ग० घ० च०।

---

(क) ऋ० १०, १८, २। (ख) ऋ० १०, १८, ३। (ग) ऋ० १०, १८, ४।
(घ) ऋ० १०, १८, ५। (ङ) ऋ० १०, १८, ७। (च) ऋ० १०, १८, ८।
(छ) ऋ० १०, १८, ९।

विक्रोशनास(क) इत्यग्निरुत्तरा सूर्य्यमर्चति(१) ।
एतौ मे(ख)ऽग्य य(ग) इत्येते स्तुतिर्थैवेन्द्रवज्रयो(२) ॥२७॥
वृक्षे वृक्षे(घ) धनुर्थैन्द्र(३) देवाना(ङ)मिति तु त्रय ।
शीतोष्णवर्षदातार पर्जन्यानिलभास्करा ॥२८॥
अन्त्ये सूर्य्यानिलौ चोभौ स्तूयेते च पदे(४) सह ।
सा ते जीवातु(च)रित्यस्यामिन्द्रो वा सूर्य्य एव वा ॥२९॥
विश्वो ह्य(छ)न्यच(५) सवाद(६) ऋचे शक्रस्य चैव हि ।
युग्मा एव तु शक्रस्य अयुग्मा एव तु स्नुषे(७) ॥३०॥
स्नुषेन्द्रस्यागतान् देवान् दृष्ट्वा शक्रमनागतम् ।
यज्ञे परोक्षवत् प्राह श्वशुरो नागतो मम ॥३१॥
यद्यागच्छेद्भक्षयेत् स(ज) धाना सोम पिबेदपि ।
इति तस्या वच श्रुत्वा तत्क्षणाहैत्यवज्रधृक् ॥३२॥
तिष्ठन् वेद्यामुत्तरस्यामुच्चैराह परोक्षवत्(८) ।

---

(१) एवत्विति क॰ ग॰ घ॰ च॰ ।
(२) एता उभौ स्तोताविति स्तूयेते वज्रमुत्तरेति क॰ घ॰ च॰ ।
(३) ऐन्द्रीति क॰ घ॰ च॰, ऐन्द्रीमिति ग॰ ।
(४) पदे सस्तूयते इति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(५) ह्यन्यन्निति क॰ ग॰ घ॰ च॰ ।
(६) सवादमिति ख॰ ङ॰ ।
(७) युग्माः शक्रस्य विज्ञेया वसुक्रस्येतरा ऋचः इति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(८) स्नुषेन्द्रस्यागतान् देवानित्यादिसार्द्धश्लोकद्वय क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न दृश्यते ।

---

(क) ऋ॰ १०,२७,१८ । (ख) ऋ॰ १०,२७,२० । (ग) ऋ॰ १०,२७,२१ ।
(घ) ऋ॰ १०,२७,२२ । (ङ) ऋ॰ १०,२७,२३ । (च) ऋ॰ १०,२७,२४ ।
(छ) ऋ॰ १०, २८, १ । (ज) ऋ॰ १०, २८, २ ।

तृतीयया चतुर्थ्या च प्रदेवत्रे[क]त्यपां स्तुतिः[१] ॥२३॥
अपां नपा[ख]दित्यनेन नाम्नाग्नि[२]र्मध्यमः स्तुतः ।
प्रति य[ग]द्वैश्वदेवन्त[३] त्तस्य प्रे[घ]त्यैन्द्रमुत्तरम्[४] ॥२४॥
वैश्वदेवौ प्रमे[ङ]त्येका सं मे[च]त्यैन्द्रो[५]तृचः[६] परः ॥
कुरु श्रवण[छ]मर्चन्ति[७] परे द्वे[८] त्रासदस्यवम् ॥२५॥
स्तुते मित्रातिथौ राज्ञि तं नपातस्त्वृषिः परैः ।
उपमश्रवसं यस्य[ज] चतुर्भिः स व्यमोचयत् ॥२६॥
प्रावेपा[झ] इति सूक्तं यत्तदक्षस्तुति[९]रुच्यते ।
अक्षा[१०]त्वाम् द्वादशी स्तौति नवम्याद्या च[११] सप्तमी ॥२७॥

---

(१) प्रदेवत्रेत्यपा स्तुताविति ख० ग० ङ० पुस्तकान्तरञ्च ।
(२) नाम्नाग्निरिति क० घ० च० ।
(३) त्विति क० ग० घ० च० ।
(४) उत्तममिति ख० ङ० पुस्तकान्तरञ्च ।
(५) तस्यास्त्वैन्द्र इति क० घ० च० ।
(६) तृच इति ग० ।
(७) अर्चन्त इति ख० ङ० पुस्तकान्तरञ्च ।
(८) परा षडिति क० घ० च० ।
(९) तदक्षस्येति क० घ० च० ।
(१०) तप्तेति ख० ङ० ।
(११) चयेति ख० ङ० पुस्तकान्तरञ्च ।

---

(क) ऋ० १०, ३०, १ । (ख) ऋ० १०, ३०, ४ । (ग) ऋ० १०, ३०, १४ ।
(घ) ऋ० १०, ३२, १ । (ङ) ऋ० १०, ३३, १ । (च) ऋ० १०, ३३, २ ।
(छ) ऋ० १०, ३३, ४ । (ज) ऋ० १०, ३३, ६ । (झ) ऋ० १०, ३४, १ ।

त्रयोदशी कृषिं स्तौति कितवस्यानुशासति[१] ।
अक्षा[२]स्तु मेधामिन्दन्ति अबुध्र[क] वैश्वदेवते[३] ॥३८॥
सावित्रमेके मन्यन्ते सह अग्ने[ख] स्तव परम् ।
आचार्यो शौनको यास्को गालवश्चोत्तमामृचम्[४] ॥३९॥
नम[ग] सौर्यमैन्द्रमपिन्[घ] सौर्यी षष्ठ्या तु या स्तुता[५] ।
निपातिनी[६]स्ता सूक्तान्ते वैश्वदेवो[७]ऽत्र तु दृच[८] ॥४०॥
आग्निमानि तु य[ङ]स्तौषि ऐन्द्राण्यस्ते वसु[च] प्र च ।
ऐन्द्राण्यनुत्तमा यास्तु मतोऽर्द्धर्च[९] बृहस्पति[छ] ॥४१॥
परे द्वि पर्य्या[ज]ग्नेये प्रथमस्योत्तमा तु या[१०] ।

---

(१) एतच्छ्लोकार्द्धं ख० च० चिह्नितपुस्तकयोर्न विद्यते ।
(२) अक्षाः इति ख० ।
(३) वैश्वदेवतमिति पाठः साधु ।
(४) एष श्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु न पठितः ।
(५) षष्ठ्यां तु संस्तुताः इति ख० ङ० पुस्तकान्तरञ्च ।
(६) निपातिन इति ख० ङ० ।
(७) सूक्तान्तो वैश्वदेव इति क० ग० घ० च० ।
(८) दृचः इति ग० ।
(९) यास्तु अर्द्धर्चमिति क० ग० घ० च०, याः सूक्ततोऽर्द्धर्च इति च० ।
(१०) उत्तमेन मिति ख० च० पुस्तकान्तरञ्च ।

---

(क) ऋ० १०, ३४, १ । (ख) ऋ० १०, ३६, १२ । (ग) ऋ० १०, ३७, १ ।
(घ) ऋ० १०, ३८, १ । (ङ) ऋ० १०, ३९, १ । (च) ऋ० १०, ४२, १ ।
(छ) ऋ० १०, ४२, ११ । १०, ४३, ११ । १०, ४४, ११ । (ज) ऋ० १०,
४५, १ ।

द्यावापृथिव्यौ विश्वे च यथा[१]ह्रूर्चेन संस्तुताः ॥ ४२॥
आसीत् काक्षीवती घोषा पापरोगेण दुर्भगा।
उवास षष्टिवर्षाणि पितुरेव गृहे पुरा ॥ ४३॥
आतस्थे महती चिन्ता न पुत्रो न पतिर्मम।
जरां प्राप्ता वृथा तस्मात् प्रपद्येऽहं शुभस्पती ॥ ४४॥
यथैतौ मामकस्तात आराध्यावाप यौवनम्।
आयुरारोग्यमैश्वर्यं सर्व्वभूतहने विषम्[२] ॥ ४५॥
रूपवत्त्वाञ्च सौभाग्यमहं तथ्य सुता यदि।
ममापि मन्त्राः प्रादुःष्युर्यैः स्तोष्येते नयाश्विनौ ॥ ४६॥
चिन्तयन्तीति सूक्तानि त्रीणि घोषा ददर्श वा।
स्तुतौ तावश्विनौ देवौ प्रीतौ तस्या भगान्तरम् ॥ ४७॥
प्रविश्य विजरारोगां सुभगाञ्चक्रतुश्च तौ।
भर्त्तारं ददतुस्तस्यै सुहस्त्यञ्च सुतं मुनिम्[३] ॥ ४८॥
ददतुस्तौ सुपर्णाभ्यां यत्नासत्येति[४] कीर्त्तिते।
काक्षीवत्यै च घोषायै तथा ददतुरोजसा[५] ॥ ४९॥

---

(१) पथ्यो इति ख॰ ग॰ ट॰।
(२) सर्व्वभूतहते श्रियमिति ङ॰।
(३) मनोरिति ङ॰।
(४) येनासत्येतीति ख॰।
(५) न तस्यां मातुरोजयेति ख॰ ङ॰ पुस्तकान्तरञ्च। आसीत् काक्षीवती घोषेत्यादि अत्र श्लोकाः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न सन्ति।

प्राजापत्यासुरी त्वासीद्विकुण्ठा नाम नामतः ।
सेच्छन्तीन्द्रसमं पुत्रं तेपेऽथ सुमहत्तपः ॥५०॥
सा प्रजापतितः कामान्(१) लेभेऽथ विविधान् वरान्(२) ।
तस्याश्चेन्द्रः स्वयं(३) जज्ञे जिघांसुर्दैत्यदानवान् ॥५१॥
एकदा(४) दानवैः सार्द्धं समरे समसज्जत ।
जघान तेषां नवतीर्नव सप्त च सप्तधा(५) ॥५२॥
भित्त्वा(६) स्वबाहुवीर्येण हैमरौप्यायसीः(७) पुरीः ।
हत्वा सर्वान् यथास्थानं पृथिव्यादिष्ववस्थितान्(८) ॥५३॥
राज्यं प्राप स दैत्येषु स्वेन वीर्येण दर्पितः ।
देवान् बाधितुमारेभे मोहितोऽसुरमायया ॥५४॥
बध्यमानास्तु तेनापि असुरेणामितौजसा ।
उपाधावन्नृषिश्रेष्ठ तत्प्रबोधाय सप्तगुम्(९) ॥५५॥

---

(१) काममिति क० ख० च० ।
(२) सुमहत्तपा इति क० ग० घ० च० ।
(३) सुत इति ख० ङ० पुस्तकान्तरयोः ।
(४) एकश्चेति क० घ० च० ।
(५) सप्तकानिति ख० ङ० पुस्तकान्तरयोः ।
(६) जित्वेति ख० ङ० पुस्तकान्तरयोः ।
(७) हैमवत्यायसीरिति क० घ० च० ।
(८) एतच्छ्लोकार्द्धं क० घ० च० चिह्नितपुस्तकेषु न पठितम् ।
(९) राज्यं प्राप स दैत्येष्वित्यादिश्लोकद्वयं क० ग० घ० च० चिह्नितपुस्तकेषु नापठ्यत ।

पृथिव्यां कालकेयांश्च पौलोमांश्चैव धन्विनः।
तांश्च युच्छादयामास[1] प्रह्लादतनयानपि[2] ॥५६॥
ऋषिस्तु सप्तगुर्नाम तस्यासीत्सुप्रियः सखा।
स चैनमभितुष्टाव जगद्भ्ये[(क)]ति करे स्पृशन् ॥५७॥
ततः स[3] बुद्धा चात्मानं सप्तगुस्तुतिहर्षितः।
आत्मानमेव तुष्टाव अहं[4] भुव[(ख)]मिति त्रिभिः ॥५८॥
कीर्तयन् स्वानि कर्माणि यानि स्म कृतवान् पुरा।
यथाकरोत् स[5] वैदेहं ध्वंसं सोमपतिं[6] नृपम् ॥५९॥
वसिष्ठशापादभवद्विदेहो[7] नृपतिः पुरा।
इन्द्रप्रसादादीजे स[8] सचैः[9] सारस्वतादिभिः ॥६०॥
प्रभुर्ता भक्तिमत्ताश्च प्रभूणामपरिक्रियाम्[10]।

---

(१) युच्छादयन् सर्व्वानिति ख॰ ङ॰ पुस्तकान्तरञ्च।
(२) दितीति क॰ ग॰ घ॰ च॰।
(३) सिति ख॰ ङ॰ पुस्तकान्तरञ्च।
(४) चाहमिति ख॰ ङ॰ पुस्तकान्तरञ्च।
(५) चेति क॰ ग॰ घ॰ च॰।
(६) ध्वसं सोमपतिरिति क॰ घ॰ च॰, सौमपतिमिति ग॰।
(७) वैदेह इति ग॰।
(८) चेति क॰ ग॰ घ॰ च॰।
(९) मन्त्रैरिति पुस्तकान्तरम्।
(१०) एतच्छ्लोकार्द्धं क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु नेष्यते।

---

(क) ऋ॰ १०, ४७, १। (ख) ऋ॰ १०, ४८, १।

विष्णुलोकेषु(१) चैश्वर्य्यं प्रभुत्वं भुवनेषु च ॥६१॥
प्र वो महे(क) इति त्वस्यामात्मन्ये(२) वार्पयत् स्वयम्(३) ।
वैश्वानरे गृहपतौ यविष्ठेऽग्नौ च पावके ॥६२॥
वषट्कारेण रूक्षणेषु चाग्नौ च(४) सहस स्तुतौ(५) ।
अपचक्राम देवेभ्य सौचीकोऽग्नि(६)रिति श्रुति ॥६३॥
स प्राविशदपक्राम्य ऋतुशो वनस्पतीन् ।
ततोऽसुरा प्रादुरासन्नष्टेऽग्नौ हव्यवाहने ॥६४॥
तेऽग्निमेवान्वैच्छन्त देवा हत्वासुरान् युधि ।
तन्तु दूराधमस्यैव वरुणश्चाप्यपश्यताम् ॥६५॥
उभावेन समादाय देवानेवाभिजग्मतु ।
दृष्ट्वा देवास्तमब्रुवन्नग्ने हव्यानि नो वह ॥६६॥
वर गृहाण मत्तश्च चिरभागो भजस्व न(७) ।
प्रत्युवाचाथ तानग्निर्विश्वे देवा यदात्थ माम्(८) ॥६७॥
तत्करिष्ये जुषतां तु होत्र(९) पञ्च जना मम ।

---

(१) ऋतु सर्व्वेष्विति क० ग० घ० च० ।
(२) त्वात्मन इति क० ग० घ० च० ।
(३) वीर्य्यमव्ययमिति ग० ।
(४) त्विति ख० पुस्तकान्तरेच ।
(५) म्नात्वर्णौ सह स्तुतावि ति ख० ग०, सहसस्तुते इति घ० ।
(६) अभिचक्राम सौचिको मथादग्निरिति क० ग० घ० च० ।
(७) चेति क० घ० च० ।
(८) वैश्वानराय दातु मेति क० घ० च०, विश्वे तूत यथाक्रमादिति ग० ।
(९) होत्रमिति ख० ग० घ० पुस्तकान्तरेच ।

(क) ऋ० १०, ५०, १ ।

ग्राममुख्यः[१] प्रणीतश्च पुत्रो गृहपतेश्च यः ॥६८॥
उत्तरो दक्षिणश्चाग्निरेते पञ्च जनाः स्मृताः ।
मनुष्याः पितरो देवा गन्धर्व्वोरगराक्षसाः ॥६९॥
यास्कौपमन्यवा[२]वेतानाहतुः पञ्च वै जनान् ।
निषादपञ्चमान् वर्णान् मन्यते शाकटायन ॥७०॥
ऋत्विजो[३] यजमानश्च शाकपूणिस्तु मन्यते ।
[४]आयुरस्तु च मे दीर्घं हवींषि विविधानि च ॥७१॥
अरिष्टिः पूर्व्वभागाश्च ब्राह्मणमध्वरेऽध्वरे[५] ।
प्रयाजा[क]श्चानुयाजाश्च घृतं सोमे पयः[६] पशुः ॥७२॥

(१) ग्रामामुख्यः इति ग० ।
(२) यास्कोपमन्यवाविति क० ख० च० ।
(३) ऋत्विजेति ख० ।
(४) ख०चिह्नितपुस्तके आयुरस्तु च मे दीर्घमिति श्लोकार्द्धात्प्राक्,—
होताध्वर्य्युश्च उद्गाता ब्रह्मणो तान् वदाति तान् ।
चक्षुः श्रोत्रं मनो वाक् च प्राणश्चेत्यात्मवादिनः ॥
गन्धर्व्वाप्सरसो देवा मनुष्याः पितरस्तथा ।
सर्पाश्च ब्राह्मणाश्चैव श्रूयन्ते ह्यैतरेयके ॥
ये चान्ये पृथिवीजाता देवाश्चान्येऽथ यज्ञियो ।
इत्यधिकं पठितम् ।
(५) ब्राह्मणमेवमध्वरे इति ख० ।
(६) च यः इति ख० ग० ।

(क) ऋ० १०, ५१, ८ ।

मद्दैवत्यानि(१) वै सन्तु यज्ञो मद्देवतोऽस्तु च(२) ।
तवाग्ने यज्ञ (क)इत्येतत् मय्यर्द्धि(३) क्षिप्रमस्तु मः(४) ॥७३॥
तस्य(५) त्रीणि सहस्राणि नव त्रीणि (ख)शतानि च ।
त्रिंशच्चैव तु देवानां सर्व्वानेव(६) वरान् ददुः ॥७४॥
ततोऽग्निः सुमनाः प्रीतो विश्वैर्देवैः पुरस्कृतः ।
विधूयाङ्गानि यज्ञेषु चक्रे होत्र(७)मतन्द्रितः ॥७५॥
भ्रातृभिः सहितः प्रीतो दिव्यात्मा हव्यवाहनः ।
तस्यास्थि देवदार्व्वासीन्मेदोमांसञ्च गुग्गुलुः ॥७६॥
सुगन्धि तेजन स्नायुः(८) शुक्रं रजतकाञ्चने ।
रोमाणि काशाः(९) केशाश्च कुशाः कूर्म्मा नखानि च ॥७७॥
अन्त्राणि शैवलास्त्वेव मज्जा सिकतकर्क्कराः(१०) ।

---

(१) मे दैवत्यानीति ख०, मद्दैवत्यान्विति ग०, मद्दैवत्यानीति क० घ० च०।
(२) न्दष० इति ग० ।
(३) मय्यार्द्धीति ग० ।
(४) एतच्छ्लोकार्द्धं क० घ० च० चिह्नितपुस्तकेषु न विद्यते ।
(५) यस्येति क० ग० घ० ङ० च० ।
(६) सर्व्वांस्तेनामिति [illegible]० ।
(७) होत्रमिति ग० ।
(८) स्नुचिति क० घ० च०, सुगन्धं तजनत् स्नायुरिति ख० ।
(९) कोशाविति क० घ० च० ।
(१०) शिकतशर्करा इति ख०, सिकतशार्करा इति ग० ।

---

(क) ऋ० १०, ५१, ८ । (ख) ऋ० १०, ५२, ६ ।

युद्ध्य बन्धुप्रभृतीन् द्वैपादा ये त्रिमण्डले।
द्वौ किरातकुली[१] नाम ततो मायाविनौ द्विजौ ॥८३॥
असमाति पुरोऽधत्त वरिष्ठौ तौ हि मन्यते।
तौ कपोतौ द्विजौ भूत्वा गत्वा गौपायनान[२]भि ॥८४॥
मायाबलाच्च योगाच्च सुबन्धुमभिपेततुः।
स दुःखादभिघाताच्च मुमोह च पपात च ॥८५॥
तौ ततोऽस्यासुमानुह्य[३] राजानमभिजग्मतुः।
ततः सुबन्धौ पतिते गतासौ भ्रातरस्त्रयः ॥८६॥
जेपुः स्वस्त्ययनं सर्व्वे मे[क]त्विति गौपायना[४] सह।
मन[ख]आवर्तयन्तोऽस्य[५] सूक्तं य[ग]दिति तेऽभ्ययुः ॥८७॥
जेपुश्च भेषजार्थं च प्रतारी[घ]त्विति परन्ततः।
सूक्तस्याद्यमृचस्त्वन्न[६] निर्ऋतेरपनोदनम् ॥८८॥

---

(१) किरातो कुली इति ग०। कुली इति क० घ० ङ० च०।
(२) गौपायनानिति घ०।
(३) ऽस्यानुप्येति ख० ऽस्याचोप्येति ग० ङ०।
(४) गौपायना इति ख० ग०।
(५) चावर्त्तन तस्येति ख०।
(६) तच्चेति ख० ग०।

---

(क) ऋ० १०, ५७, १। (ख) ऋ० १०, ५७, ३। (ग) ऋ० १०, ५८, १।
(घ) ऋ० १०, ५९, १।

त्रयः पादा मो ष्वि(क)ति तु सौम्या नैर्ऋत उत्तमः।
ऋक् सौम्या नैर्ऋती(१) चैषा असुनीते(ख)स्तुतिः परा ॥८९॥
द्वृचे(२) त्वानुमतं पादमन्यं यास्कस्तु मन्यते।
भूम्याः सोमस्य पूषा च खं पथ्या स्वस्तिरेव च ॥९०॥
सुबन्धोरेव प्राप्त्यर्थं पुनर्न(ग) इति तु स्तुता(३)।
ऋचः श(घ)मिति रोदस्योरैन्द्र्योऽर्द्धर्चः स(ङ)मित्यृचि ॥९१॥
रपसो नाशनार्थं वै तुष्टुवुस्तत्र रोदसी।
रप (च)इत्यभिधानन्तु गदितं पापकुष्ठयोः ॥९२॥
अग्निरे(छ)ति चतसृभिस्तत ऐक्ष्वाकुमस्तुवन्।
इन्द्रक्षत्रे(ज)त्यृचा चास्य स्तुत्वाग्नमिपुराग्निपः(४) ॥९३॥
अगस्त्यस्ये(झ)ति माता च तेषां तुष्टाव तं नृपम्।
स्तुतः स राजा सव्रीडस्तास्तौ गौपायनानभि ॥९४॥

---

(१) निर्ऋतीति ख॰ ग॰।
(२) ऋचीति ग॰।
(३) संस्तुतः इति ख॰।
(४) एतच्छ्लोकार्द्धं ग॰ चिह्नितपुस्तके नैक्ष्यते।

---

(क) ऋ॰ १०, ५९, ४। (ख) ऋ॰ १०, ५९, ५। (ग) ऋ॰ १०, ५९, ७। (घ) ऋ॰ १०, ५९, ८। (ङ) ऋ॰ १०, ५९, १०। (च) ऋ॰ १०, ५९, १०। (छ) ऋ॰ १०, ६०, २। (ज) ऋ॰ १०, ६० ५। (झ) ऋ॰ १०, ६०, ६।

सूक्तेनाथ स्तुव[1]न्नग्निं दैपदेन यथाचितु[2] ।
अग्निरित्यब्रवीदेता[3]न्नयमन्त परैरसून्[4] ॥८५॥
सुबन्धुरस्य चैक्ष्वाको[5]मया गुप्तो हितार्थिना ।
सुबन्धवे प्रदायासून्[6]जीवेत्युक्त्वा च पावक ॥८६॥
स्तुतो गोपायनै प्रीतो जगाम त्रिदिव प्रति ।
अय माते[क]ति हृष्टास्ते[7] सुबन्धोरसुमाह्वयन् ॥८७॥
शरीरमभिनिर्दिश्य सुबन्धो पतित भुवि ।
सूक्तशेय जगुश्चास्य चेतसो धारणाय ते ॥८८॥
हस्ताभ्याय[ख] मित्यस्या पृथक्पाणिभिरस्पृशन् ।
यद्विद्[ग] वैश्वदेवानि द्वितीयेऽङ्गिरसां स्तुति[8] ॥८९॥
जन्म कर्म च शक्रस्य[9] इन्द्रेण सह कीर्तयन् ।

---

(१) सूक्तेनैषा स्तुवन्निति क० ग० घ० च० ।
(२) द्वैपद यत्तदचिष्यिति क० घ० च० ।
(३) देवाग्निति ग० ।
(४) प्रदा यसुरिति क० ग० घ० ङ० च० ।
(५) सुबन्धोरस्य चैक्ष्वाकोरिति क० ख० घ० च० ।
(६) यसुमिति ख० ग० ।
(७) ग्रेषेयेति ख० ।
(८) ऋषिरिति क० घ० च० ।
(९) सह्यास्येति क० घ० च० ।

---

(क) ऋ० १०, ६०, ७ । (ख) ऋ० १०, ६०, १२ । (ग) ऋ० १, ६१, १ ।

आचार्य्या केचिदित्याहुरत्र वाग्विदुषा स्तव ।
ययाभिर्निन्द्यते[१] तृभ्भि सूक्तेऽन्याभिरनर्थवित् ॥१०७॥
ये रैनामन्वविन्दन्त विद्वांस स्थपिता शचीम्[२] ।
तथा च ह्यभजद्यज्ञे तद्वोक्त[३] तृतीयया ॥१०८॥
प्रशस्यते दशम्या[४] तु विद्वानुत्तमया तृचा[५] ।
षष्ठे महत्त्विञ्चामाह विनियोगश्च कर्म्मणाम् ॥१०९॥
परे तु स्तूयते चोक्ता अष्टौ[क] चैवादिते[६] सुता ।
धातेन्द्रो वरुणो मित्र अंश सूर्य्योऽर्य्यमा भग ॥११०॥
ऐन्द्रेऽशनिष्ठा[७] सूक्ते द्वे मखि[ख]त्यच परन्तु यत् ।
तत्र प्राच्य प्रतीच्यश्च स्वधयो दक्षिणाय या[८] ॥१११॥
ता सप्त सप्तकैर्वर्गैर्मन्त्र्यन्ते प्रधानत[९] ।

(१) तथापि निन्दत इति ख० ।
(२) विद्वांसपिमता सतीमिति ख०, विद्वांसपिंगता सतीमिति ग० ।
(३) उक्त इति क० घ० च० ।
(४) दशम्येति ग० ।
(५) तृचेति घ० ग० ।
(६) आप्ता प्राप्तौ चादितये इति क० घ० च० ।
(७) अनिष्ठा इति क० घ० च० ।
(८) दक्षिणान्यर्वाति ख०, दक्षिणाप्यग्रा इति ग० ।
(९) ऐषामखिल मन्त्र आदिष्टद इति ग०

(क) ऋ० १० ७२, ८ । (ख) ऋ० १०, ७४, १ ।

सत्यसूर्य्यर्त्तुसोमानां सौर्य्याश्च तृगुच्यते ।
पराभिस्तिसृभिस्तृग्भि(१)रुच्यते सोम चौषधः(२) ॥११८॥
विसृष्टमुत्तरा त्वाधास्तृक् चन्द्रमसमर्चति ।
सूर्य्याये भावसृत्तस्तु रैभी(क)त्यष्टाभिरुच्यते ॥११९॥
य(ख)दश्विनौ हुव(३)स्तौति सूर्य्य(४) एवोत्तरार्द्धति ।
सप्तदृशी वैश्वदेवी सूर्य्याचन्द्रमसी परा ॥१२०॥
परस्याः प्रथमौ पादौ सौर्य्यौ चान्द्रमसौ परौ ।
सौर्द्धमाभो हुवे त्वस्मिनश्विनौ मन्यते स्तुतौ ॥१२१॥
सूर्य्याचन्द्रमसौ तौ हि प्राणापानौ च तौ स्मृतौ ।
अहोरात्रे(५) च तावेव ख्यातौ तावेव रोदसी ॥१२२॥
अश्नुवाते हि तौ लोकाञ्ज्योतिषा च रसेन च ।
पृथक् पृथक्के चरतु(६) दक्षिणेनोत्तरेण च ॥१२३॥

---

(१) त्वचेति ख० ।
(२) चौषधिरिति ग० ।
(३) हुव इति ग० ।
(४) सूर्य्यमिति पाठ साधु ।
(५) अहोरात्राविति ख० ।
(६) तौ चरतः इति पाठः सङ्गतः । चेरतुरिति ग० ।

---

(क) ऋ० १०, ८५, ६। (ख) ऋ० १०, ८५, १४।

[1]सुकिंशुक[क]मिति लग्नां सूर्य्यामारोहतीं पतिम् ।
स्तौति विश्वावसुश्चैव हृचे[2] गन्धर्व्वमुत्तरे ॥१२४॥
अनुवरा[ख] इत्यनया यौ तौ[3] स्तौतीह दम्पती ।
ग्रहान् प्रपद्यमानान्तु पराभिः पञ्चभिर्वधूम् ॥१२५॥
वाससश्च वधूनाश्च वरदानं प्रपद्यते ।
ततस्त्रिभिर्विरागस्य यद्दध्व[ग][4] इति वाससः ॥१२६॥
तद्युक्तया तया स्पर्शो निद्रिते पत्युरेव च ।
ऋगुत्तरा तृतीयस्य विभवे सति वाससः ॥१२७॥
अन्यत्र मैथुनाद्भर्त्तुर्वरणं प्रतिषिध्यते ।

---

(१) ख० चिह्नितपुस्तके सुकिंशुकमिति श्लोकात् प्राक्,—
सूर्य्यः सरति भूतेषु सवीरः पवितानि वा ।
सुहृयत्नापात्येषु सर्व्वकार्य्याणि च वदत् ।
चात्र भवति वाचा च श्रावनिन्द्रतुमुच्यते ।
वनेषन्ने समेतानि निर्म्मितेऽथ चक्रमोः ।
इत्यधिकपाठोऽस्ति ।

(२) द्युचे इति ग० ।

(३) यात्वै इति ख० ।

(४) यद्ध्वइति वाससः इत्यादि ऋगुत्तरा तृतीयस्येत्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु न विद्यते ।

---

(क) ऋ० १०, ८५, २० । (ख) ऋ० १०, ८५, २३ । (ग) ऋ० १०, ८५, ३० ।

ये(क) यक्ष्मनाशिनीं स्तौति इहे(१)मा परिपन्थिनः ॥१२८॥
अघोरे य(ख)दिति त्वात्र यादृग्वाधूयमर्हति ।
आशास्ते(२) चैव विविधं शान्तिस्थानानुशासनम्(३) ॥१२९॥
वध्वा स्त्री भावदृत्ति(४)श्च परया तत्र कथ्यते ।
पराभिराशीराशास्ते पृथक् ताभ्यः सहैव च । ॥१३०॥
मन्त्रा वैवाहिका ह्येते निगद्यन्ते नृणामपि ।
आर्त्विज्या यजमानाश्च यथारूप विशेषतः ॥१३१॥
प्रत्यृच प्रतिकीर्त्यन्ते देवताश्चेह यास्तु या.(५) ।

---

(१) इमे इति ग० ।
(२) आशास्तीति क० ग० घ० च० ।
(३) शान्तिमिथ्यानुशासनमिति ख० ।
(४) भावक्षिमिरिति क० घ० च० ।
(५) ख० चिह्नितपुस्तके, पराभिराशीराशास्ते इत्यादि देवताश्चेह यास्तु या इत्यन्तपाठो न विद्यते । तत्र चास्मिन् स्थले,

सुभगाशि(ग)तद्दिवायोहस्तग्रन्थ धनमाश्रिय ।
आशास्ते परयाक्रस्त्रा सयोगार्थाश्रयाश्रिय ॥
पराभिराश्रिय आस्ते पृथक् ताभ्यां सह क्वचित् ।
अघोरे(घ)ति ह्यचे तस्याः स(ङ)मिश्रेति द्वयोर्द्वयो ॥
आशा प्रजापते प्रेमानश्च(च) यथारूप विशेषतः ।
प्रत्यृच कीर्त्यते देवता तेषु भावदृत्तत ॥

इति पाठो वर्त्तते ।

---

(क) ऋ० १०, ८५,३१ । (ख) ऋ० १०,८५,२५ । (ग) ऋ० १०, ८५,३६ । (घ) ऋ० १०, ८५, ४४ । (ङ) ऋ० १०,८५,४६ । (च) ऋ० १०, ८५, ४७ ।

वदेत्तां(१) देवतां तासु मराग्नेयीर्वदेत वा ॥१२१॥
उपसः सर्व्वया चैता भाववृत्तं प्रचचते।
सूर्य्यया मत्र सूक्तेऽस्मिन् पाद्यैवात्र लक्ष्यते ॥१२२॥
वि हि(क) वार्षाकपं सूक्तमसौ तु(२) कपिलो ह्यया।
इन्द्रः प्रजापतिश्चैव विश्वस्मादिन्द्र उत्तरः(ख) ॥१२४॥
रक्षोहणा(ग)द्दि चाग्नेयं(३) त्रीन् स्तौत्यग्नीन् परं हविः(घ)।
इमञ्च मध्यमञ्चैव अग्नौ वैश्वानरश्च यः ॥१२५॥
इन्द्रं(ङ) पुरुषसूक्त(च)न्तु(४) अन्वयया पुरुषस्य तु।
यथैनमभजन् साध्या(५) यथार्थं सोऽयं(६) उच्यते ॥१२६॥
आपान्तमन्यु(छ)रित्यस्यां(७) स्तुतः सोमस्तु(८) दृश्यते।

---

(१) वदेतामिति ख॰ ग॰।
(२) ह्येति ग॰।
(३) वाग्नेयमिति क॰ घ॰ च॰।
(४) यथैन्द्रात्पौरुषं सूक्तमिति ख॰।
(५) साध्येति ख॰।
(६) सार्थं इति ख॰।
(७) इत्येतामिति ख॰।
(८) चमेति ख॰ ग॰।

---

(क) ऋ॰ १०, ८६, १। (ख) ऋ॰ १०, ८६, ५। (ग) ऋ॰ १०, ८७, १।
(घ) ऋ॰ १०, ८८, १। (ङ) ऋ॰ १०, ८९, १०। (च) ऋ॰ १०, ९०, १।
(छ) ऋ॰ १०, ८९, ५।

सालोक्यात्साहचर्याद्वा स्तूयते सोम एव वा ॥१२७॥
निपातभाक् सोमस्य ऋचा रथीतरोऽब्रवीत् ।
ऐन्द्रो ह्येव निपातस्तु(१) स्तुतोऽग्निरुदकेन(२)च ॥१२८॥
यज्ञस्य वो(क) वैश्वदेवे प्रैत(ख) इत्युत्तरन्तु यत् ।
तथाम्बुदस्तु ग्रावाण मूर्मिमन्तमिवार्चति ॥१२९॥
पुरूरवसि राजर्षावप्सरास्तूर्वशी पुरा ।
न्यवसत् सविदङ्कुला तस्मिन् धर्मंश्चचार च ॥१४०॥
तया तस्य च सवासं(३)असूयन् पाकशासन ।
पैतामहस्यानुरागमिन्द्रवत्त्वापि(४) तस्य तु ॥१४१॥
स तयोस्तु वियोगार्थं(५) पार्श्वस्थं वज्रमब्रवीत् ।
प्रीतिभिन्ध्यनयो(६)र्वज्र मम चेदिच्छसि प्रियम् ॥१४२॥
तथेत्युक्त्वा तयो प्रीतिं वज्रो भिद्ति(७) मायया ।
ततस्तया विहीनस्तु चचारोन्मत्तवन्नृप ॥१४३॥

---

(१) येन्द्रेषु हि निपातोऽन्त्येति क० ग० घ० च० ।
(२) ववयेन च इति ख० ।
(३) सवासमिति क० घ० च० ।
(४) चानुरागमिन्द्रवर्चापीति क० ख० घ० च० ।
(५) विभागार्थमिति क० घ० च० ।
(६) प्रीतिम्भिन्द तयोरिति ग० ।
(७) भिनत्तीति साधु ।

---

(क) ऋ० १०, ६२, १ । (ख) ऋ० १०, ९४, १ ।

चरन् सरसि सोऽपश्यदभिरूपामिवोर्वशीम् ।
सखीभिरभिरूपाभिः पञ्चभिः पार्श्वतो वृताम्(१) ॥१४४॥
तामाह पुनरेहीति नेति सा त्वब्रवीन्नृपम् ।
तामुपाक्रयत प्रीत्या दुःखात्सा त्वब्रवीन्नृपम् ॥१४५॥
अमाप्याहं त्वयाद्येह स्वर्गे प्राप्स्यसि मां पुनः ।
आख्यानं प्रति चाख्यान(२)मितरेतरयोरिदम् ॥१४६॥
संवादं मन्यते यास्क इतिहासन्तु शौनकः ।
हय(क) इति परमैन्द्रं शते(ख)या (ग)ओषधीस्तवः ॥१४७॥
आर्ष्टिषेणस्तु देवापिः कौरव्यश्चैव शन्तनुः(३) ।
भ्रातरौ(४) कुरुषु त्वेतौ राजपुत्रौ बभूवतुः ॥१४८॥
ज्येष्ठस्तयोस्तु देवापिः कनीयांश्चैव शन्तनुः ।
त्वग्दोषी राजपुत्रस्तु(५) ऋष्टिषेणसुतो(६)ऽभवत् ॥१४९॥

---

(१) वृता शतक्रमिः स्मृतः इति ख० ।
(२) व्याख्यानमिति क० ग० घ० ङ० ।
(३) कनीयांश्चैव शन्तनुरिति ख० ।
(४) भारताविति क० ग० घ० ङ० ।
(५) त्वग्दोषिणौ राजपुत्रः इति क० घ० ङ० ।
(६) आर्ष्टिषेणसुतः इति ग० ।

---

(क) ऋ० १०, ९५, १ । (ख) ऋ० १०, ९६, १ । (ग) ऋ० १०, ९७, १ ।

राज्येन च्छन्दयामासुः[१] प्रजाः स्वर्गं गते गुरौ ।
स मुहूर्त्तमिव ध्यात्वा प्रजास्ताः प्रत्यभाषत ॥ १५० ॥

इति वृहद्देवतायां सप्तमोऽध्यायः ।

---

(१) छन्दयेयुस्तु राज्यमिति घ० ङ० च० ।

## अथाष्टमोऽध्यायः ।



न राज्यमहमर्हामि नृपतिर्वोऽस्तु शन्तनुः ।
तथेत्युक्त्वाभ्यषिञ्चंस्ताः प्रजा राज्याय शन्तनुम् ॥१॥
ततोऽभिषिक्ते कौरव्ये वनन्देवापिराविशत् ।
न ववर्षाय पर्जन्यस्तस्मिन्राष्ट्रे शतं समाः ॥२॥
ततोऽभ्यगच्छद्देवापिं प्रजाभिः सह शन्तनुः ।
प्रसादयामास चैनं तस्मिन् धर्मव्यतिक्रमे ॥३॥
सिषिञ्च(१) चैनं राज्येन(२) प्रजाभिः सहितस्तदा ।
तमुवाचाथ देवापिः प्रह्वं प्राञ्जलिसंस्थितम्(३) ॥४॥
न राज्यमहमर्हामि त्वग्दोषोपहतेन्द्रियः ।
याजयिष्यामि ते राजन् वृष्टिकामेष्ट्यया स्वयम् ॥५॥
ततस्तन्तु पुरोऽधत्त आर्त्विज्याय स शन्तनुः ।
स चास्य चक्रे कर्माणि(४) वार्षिकाणि यथाविधि ॥६॥

---

(१) सिषेचेति पाठः समीचीनः ।
(२) राज्ये त्विति पाठः साधीयान् । चैव राज्यचेति क० ख० च० ।
(३) प्रह्वस्तु प्राञ्जलिः स्थितः इति क० ख० च०, प्रह्वन्तु प्राञ्जलिस्थित-
मिति ग०, प्रह्वं प्राञ्जलिस्थितमिति पुस्तकान्तरम् ।
(४) चकार सोऽस्य कर्माणीति ख० ।

बृहस्पते प्रती(क)त्यृग्भिरीजे चैव(१) बृहस्पतिम् ।
द्वितीयस्यास्य सूक्तस्य बोधिते जातवेदसा ॥७॥
अस्ये ते सुमतिं(२) वाचं दधामि स्तुहि देवताः(३) ।
इति(४) सोऽस्मै ददौ प्रीतो वाचं देवी(५) तया च सः ॥८॥
अभिष्टुतस्तृभिर्देवान् जगौ दध्यर्थमेव तु ।
अग्निश्च सूक्तशेषेण क(ख)मैन्द्रं सूक्तमुत्तरम् ॥९॥
इन्द्रदृह्ये(ग)ति विश्वेषामु(घ)दित्यृग्भिस्तुतिः परम् ।
शक्तिप्रकाशने तेषां(६) विनियोगोऽत्र कीर्त्यते ॥१०॥
प्रे(ङ)तीतिवाचसूक्तन्तु(७) मन्यते शाकटायनः ।

---

(१) प्रतीत्येतदीजे चैवेति क० ख० च० ।
(२) अस्येति हिमतिरिति ख० ।
(३) द्वितीयस्यास्य सूक्तस्येत्यादि दधामि स्तुहि देवताः इत्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु नोपलभ्यते ।
(४) तत इति क० ग० घ० च० ।
(५) वाचन्देवीमिति क० ग० घ० च० ।
(६) शक्तिप्रकाशने तेषामिति क० ख० ग० घ० च० ।
(७) इतिवाचं प्रेति सूक्तमिति ख०, प्रेतिवाच प्रेति सूक्तमिति पुस्तकान्तरम् ।

---

(क) ऋ० १०, ९८, १ । (ख) ऋ० १०, ९९, १ । (ग) ऋ० १०, १००, १ । (घ) ऋ० १०, १०१, १ । (ङ) ऋ० १०, १०२, १ ।

घास्त्रैन्द्री घन[१]मैन्द्रं वा वैश्वदेवन्तु शौनकः ॥११॥
आजावनेन[२] मार्ग्यास्व[३] इन्द्रासोमौ तु सुक्तश्च ।
अजयद्वृषभ[४] युक्ता ऐन्द्रश्च द्रुघण रथे ॥१२॥
युध्यन् सख्ये जय प्रेप्सुरैन्द्रो[५] प्रतिरथ जगौ[६] ।
आशु[क]रैन्द्रमघादेवी अमीया[ख]मित्यृचि स्तुता ॥१३॥
चतुर्थी वार्हस्पत्या स्यादावत्स[ग] प्रसह्यामिति[७] ।
द्वृचे च[८] मरुतः प्रे[घ]ति सर्व्वेति परसन्तु यत् ॥१४॥
तथाग्निरुकस्त्काद्वाद्वगेका सूर्य्यमर्च्चति ।
घर्मपरा[९]स्ततश्चन्तु सवितारमभी[ङ]ति या ॥१५॥
सूक्तमेषश्च पङ्कृचः सूर्य्याचन्द्रमसौ सच ।

---

(१) मथमिति ख०, घथमिति घ० च० ।
(२) आजावने त्विति ख०, आजीवनन्त्विति पुस्तकान्तरम् ।
(३) मार्म्मास्व इति ख० गार्ग्यस्वेनि पुस्तकान्तरम् ।
(४) वृषभमिति क० ख० ध० ।
(५) इन्द्रः इति पाठ सङ्गत ।
(६) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु नेष्यते ।
(७) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु नोपलभ्यते ।
(८) द्वृचस्त्विति ख०, द्वृचे त्विति ग० ।
(९) धर्म्मापरा इति ख० ग० ।

---

(क) ऋ० १०, १०३, १ । (ख) ऋ० १०, १०३, १२ । (ग) ऋ० १०, १०३, ५ ।
(घ) ऋ० १०, १०३, १३ । (ङ) ऋ० १०, १०६, ७ ।

तुष्टावेन्द्रमसावी(क)ति अष्टकोऽस्मात् परेण(१) तु ॥१६॥
कौत्सः कदा वसोः (ख)सूक्तं दुर्मित्रो नाम नामतः ।
सुमित्र इति नामास्य(२) गुणार्थमितरं पदम् ॥१७॥
भर्तास्यास्तु प्रजाकामः कर्माणि कृतवान् पुरा ।
न हि लेभे प्रजाः काश्चित्काश्यपो मुनिसत्तमः ॥१८॥
उवाच भार्य्या भर्त्तारं सुतानिच्छसि यावतः ।
तावतो जनयिष्यामि देवता द्वन्द्वशस्तु हि ॥१९॥
समभ्यष्टुस्तु सर्व्वाणि द्वन्द्वानि स्तुतिकाम्यया ।
तान्यवेक्ष्याथ तत्सूक्ते(३) नासत्यौ सूक्तभागिनौ ॥२०॥
यदेतदन्ततो भावादाश्विनं सूक्तमुच्यते ।
न ह्यस्मिन्देवतालिङ्गं प्रायेणात्र हि दृश्यते ॥२१॥
सूक्तेन तु परेणात्र स्वयमाविर(ग)भूदिति ।
आत्मानमेव तुष्टाव प्राजापत्याथ(४) दक्षिणा(घ) ॥२२॥
दातॄंश्च स्तुतानेके दक्षिणानां वदन्ति तु ।
दातृत्वाद्दक्षिणानाञ्च भोजाश्चतसृभिः स्तुताः ॥२३॥

---

(१) अष्टकः परमेष्ठेति क० ग० घ० ।
(२) सुमित्रश्चैव नाम स्यादिति क० ग० घ० ।
(३) सप्तके इति ख० ।
(४) अथेति ख० ।

---

(क) ऋ० १०, २०४, १ । (ख) ऋ० १०,१०५, १ । (ग) ऋ० १०,१०७,१ ।
(घ) ऋ० १०, १०७, ५ ।

असुराः पणयो नाम रसापारनिवासिनः[१] ।
गास्तेऽपजह्रुरिन्द्रस्य न्यगूहंश्च[२] प्रयत्नतः ॥२४॥
बृहस्पतिस्तथापश्यद्दृष्ट्वेन्द्राय शशंस च ।
प्राहिणोत्तत्र दूतीन्तु[३] सरमां पाकशासनः ॥२५॥
किं[क]मित्यचायुजाभिस्तां पप्रच्छुः पणयोऽसुराः ।
कुतः कस्यासि कल्याणि किं वा कार्यमिहास्ति ते ॥२६॥
अथाब्रवीत्तां सरमा दूत्यैन्द्री विचराम्यहम् ।
युष्मान् व्रजायाभ्यिच्छन्तो[४] ऐन्द्रीर्गाश्चैव पृच्छति ॥२७॥
विदित्वेन्द्रस्य दूतीन्तामसुराः पापचेतसः ।
ऊचुर्मा सरमे गास्त्वमिहास्माकं स्वसा भव ॥२८॥
सूक्तस्य चान्यया चर्चा[५] युष्माभिस्त्वेव सर्वशः ।
साब्रवीन्नाह[ख]मिच्छामि स्वसृत्वं वा धनानि वा ॥२९॥
पिबेयं[६] तु पयस्तासां गवां यास्ता निगूहथ ।
असुरास्तां तथेत्युक्त्वा तदाजह्रुः पयस्ततः ॥३०॥

---

(१) सिन्धुपारनिवासिनः इति ख० ।
(२) निगूह्यस्थेति क० घ० च० ।
(३) दूत्येऽप्येति ख० ग० ।
(४) विधूय वः सर्वा इति क० घ० च० ।
(५) सूक्तस्यान्तपर्य्येति क० घ० च० ।
(६) पिबामीति क० घ० च० ।

---

(क) ऋ० १०, १०८, १ । (ख) ऋ० १०, १०८, १० ।

सा स्वभावाच्च लौल्याच्च पीत्वा तत्[1] पय आसुरम् ।
परं[2] सवननं दिव्यं बलपुष्टिकरं ततः ॥२१॥
शतयोजनविस्तारामतरत्तां रसां पुनः ।
यस्याः पारेऽपरे तेषां पुरमासीच्च दुर्जयम् ॥२२॥
पप्रच्छेन्द्रश्च सरमां कच्चिद्गा दृष्टवत्यपि ।
सा नेति प्रत्युवाचेन्द्रं प्रभावादासुरस्य हि[3] ॥२३॥
तां जघान तदा क्रुद्ध उद्गिरन्तीं पयस्ततः ।
जगाम सा भयोद्विग्ना पुनरेव पणीन् प्रति ॥२४॥
पयसस्तस्य पद्धत्या रथेन हरिवाहनः ।
गत्वा जघान च पणीन् गाश्च ताः पुनराहरत् ॥२५॥
तेऽवदन्[4] वैश्वदेवन्तु जामदग्न्यस्तथाप्रिय[क] ।

---

(१) पेति क० ग० घ० ।
(२) पद इति ग० ।
(३) सिति क० ख० ग० घ० ।
(४) ख० चिह्नितपुस्तके एतच्छ्लोकार्द्धं न विद्यते । तत्र चास्मिन् स्थले,
ते च त वैश्वदेवं स्यात् सदाशाया अजन्मनौ ।
दामदग्निजमिडाद्याः प्रियस्तावाप्य परः ।
अस्मात् युग्मपत् सर्व्वे वैश्वपास्त्रिभिः परैः ।
इति पाठो वर्त्तते ।

(क) ऋ० १०, १०८, १ ।

युगपद्वै प्रजन्तं त[१] वैरूपा षण्मयस्तयः ॥३६॥
इन्द्रं प्रति जगुः सूक्तैः पणीन् प्रतिजिगीषिणम्[२]।
वैश्वदेवं परं सूक्तं घर्मा[क]स्त्वेकेन तु सुतान् ॥३७॥
देवानिन्द्रं च मन्यन्ते छन्दांस्यग्निं[३] च मध्यमम्।
आग्नेयं चित्र[ख] इत्येतज्जगादर्षिरूपश्रुतः ॥३८॥
पिबे[ग]न्द्रं स्तौति ने[घ]त्यचं रक्षोघ्नाग्नेयमुत्तरम्[४]।
इति वै[ङ] तावदैन्द्रं त[च]द्राख्याः पथ्यां निपातिताः[५] ॥३९॥
प्रजापत्यमथाग्नेयं वैन्यमित्यनुपूर्वशः।
वरुणेन्द्राग्निसोमानां[६] मिमं न[छ] इति संस्तुतिः[७] ॥४०॥
यतस्सम्तत्र सूक्तादावग्निरात्मस्तवं जगौ।
स्तुतः सोमस्तु षष्ठ्या च नवम्या[८]द्य पदैस्त्रिभिः ॥४१॥

---

(१) प्रजं तन्निवात क० घ० च०।
(२) प्रतिमनीषिणः इति ख०।
(३) छन्दांस्यग्निमिति ख०।
(४) चाग्नेयन्तु परं ततः इति क० घ० च०।
(५) पथ्याश्च संस्तुताः इति ख०।
(६) सोमाग्निवरुणानामन्विति क० घ० च०।
(७) संस्तवः इति ख० ग०।
(८) नवम्यामिति ख०, नवम्येति ग०।

---

(क) ऋ० १०, ११४, १। (ख) ऋ० १०, ११५, १। (ग) ऋ० १०, ११६, १। (घ) ऋ० १०, ११७, १। (ङ) ऋ० १०, ११८, १। (च) ऋ० १०, १२०, १। (छ) ऋ० १०, १२४, १।

आग्नेयं वैश्वदेवञ्च अय(क)मित्यृच तु द्व्यृचाः(१)।
पार्ष्ण्याश्चत्वार ऋषयो अग्निमार्चन् पृथक् पृथक् ॥५२॥
आश्विनं त्यच्चि(ख)दित्येतदय(ग)मैन्द्रं ततः परम्।
इमां खनामी(घ)ति सूक्तमिन्द्राणी यत्त्वयं जगौ ॥५४॥
तद्धौपनिषदं सूक्तं भाववृत्तं प्रचक्षते।
(२)अरण्यानी(ङ)त्यरण्यान्याः स्तुतिरैन्द्रे तदुत्तरे ॥५५॥
सावित्रं सविता यन्त्रैः(च) समिद्धश्चित् समिध्यसे(छ)।
आग्नेयं श्रद्धया(ज) श्राद्धं मेधासूक्तमतः परम् ॥५६॥
आग्नेयमाहुरित्यभ्याख्याय(झ) ऐन्द्रे ततः परे।
सोम एकेभ्य(ञ) इत्येतद्भाववृत्तं प्रचक्षते(३) ॥५७॥

---

(१) द्व्यृचा इति ग०।
(२) ख० चिह्नितपुस्तके अरण्यानीति श्लोकात् प्राक्, उत्तरानपध्नां पाठाम्नु स्तौति सूक्ते मत्रैरावधिम्। प्रतिसंवननीं त्वं याम्याः सप- त्नापनोदिकाम्। इत्यधिकं पठितम्।
(३) वदन्ति त्विति ख०।

---

(क) ऋ० १०, १४२, १। (ख) ऋ० १०, १४३,१। (ग) ऋ० १०,१४४,१।
(घ) ऋ० १०, १४५, १। (ङ) ऋ० १०,१४६ १। (च) ऋ० १०,१४९,१।
(छ) ऋ० १०, १५०, १। (ज) ऋ० १०,१५१,१। (झ) ऋ० १०,१५२,१।
(ञ) ऋ० १०, १५४, १।

शौनको वैश्वदेवन्तु मन्यते शाकटायनः ।
सूक्तेऽस्मिन् देवतास्तिस्र एता एव प्रकीर्त्तिताः[१] ॥५८॥
यदराय्यो[क]ऽत्यसङ्कीर्णं तत्र चत्तो[ख] इति हूचे ।
प्राधान्याद्वा निपाताद्वा स्तूयते ब्रह्मणस्पतिः ॥५९॥
इन्द्रस्यैव य[ग]दित्यस्यां विश्वेदेवाः परी[घ] त्वृचि ।
आग्नेयं चाग्नि[२][ङ]मित्येतद्वैश्वदेवमिमा नु कम्[च] ॥६०॥
इन्द्रः प्राधान्यतस्तत्र[३] विश्वैर्देवैः सह स्तुतः ।
आदित्यैश्च मरुद्भिश्च तथारूपं हि दृश्यते ॥६१॥
सूर्यो न[छ] इति सौर्य्यन्तु यत्त्वेतदुदसा[ज]विति ।
पौलोमी स्वान् गुणांस्तत्र सपत्नीनां प्रशंसति ॥६२॥
ऐन्द्रं[४] तीव्रस्य[झ] मुञ्चामि[ञ] भैषज्यं यक्ष्मनाशनम् ।
राजयक्ष्मघ्नं सूक्तं प्राजापत्यं तदुच्यते ॥६३॥
ऐन्द्राग्नं मन्यते यास्क एके विश्वोक्तदेवतम् ।

---

(१) शौनको वैश्वदेवन्त्वित्यादि एता एव प्रकीर्त्तिता इत्यन्तपाठः ख० ग० घ० ङ० चिह्नितपुस्तकेषु नेक्ष्यते ।

(२) स्वग्निमिति ग० ।

(३) प्रधानतो वाचेति ख० ।

(४) इन्द्रमिति ख० ।

---

(क) ऋ० १०, १५५, १ । (ख) ऋ० १०,१५५,२ । (ग) ऋ० १०,१५५,४ ।
(घ) ऋ० १०, १५५, ५ । (ङ) ऋ० १०,१५६,१ । (च) ऋ० १०,१५७,१ ।
(छ) ऋ० १०, १५८, १ । (ज) ऋ० १०,१५९,१ । (झ) ऋ० १०,१६०,१ ।
(ञ) ऋ० १०, १६१, १ ।

गर्भसंस्रवसंयुक्तं(१) यत्नेतद्ब्रह्मणे(क)ति [illegible] ॥६४॥
स्रवतामपि गर्भाणां दृष्टन्तदनुमन्त्रणम् ।
वैन्यन्तु वेनस्तत्पश्य(२) दक्षीभ्या(ख) यक्ष्मनाशनम् ॥६५॥
दुःस्वप्नघ्नमपेही(ग)ति निपातीन्द्रोऽग्निरेव तु ।
आशीर्वृषि(३)र्दीर्घतमाः(४) कपोतो नाम नैर्ऋतः ॥६६॥
चक्रे(५)कपोतस्तस्याग्नामग्निधाने पदद्भिस ।
स त(६)मात्मस्थितैर्वाक्यैः कपोत स्तुतवानृषिः(७) ॥६७॥
देवा (घ)इति तु सूक्तेन प्रायश्चित्तार्थमुच्यते ।
ऋषभं मा(ङ) सपत्नघ्न येनेदमिति मानसम् ॥६८॥
तुभ्ये(च)त्यृषी दद्दृशतुरैन्द्र गाथिनभार्गवौ ।
वरुणो विधानानुमतिर्धाता सोमो बृहस्पतिः ॥६९॥
षडेता देवतास्त्वत्र तृतीयायामृचि स्तुताः ।
वातस्ये(छ)ति परेणास्तौदनिलं पितरं स्वकम् ॥७०॥

---

(१) रक्षोघ्नाग्नेयमित्युक्तमिति ख॰ ग॰ ।
(२) पश्यद्दित्यर्थे पश्यदित्यार्षः । आवस्तत्र परश्चेवमिति ख॰ ।
(३) आशीर्विष इति ख॰ ।
(४) दीर्घतमाः इति क॰ घ॰ च॰ ।
(५) चकारोदिति क॰ घ॰ च॰ ।
(६) शतमिति ख॰, सुतमिति ग॰ ।
(७) कपोतो नैर्ऋतस्तदेति क॰ ग॰ घ॰ च॰ ।

---

(क) ऋ॰ १०, १६२, १ । (ख) ऋ॰ १०,१६३,१ । (ग) ऋ॰ १०,१६४,१ ।
(घ) ऋ॰ १०, १६५, १ । (ङ) ऋ॰ १०,१६६, १ । (च) ऋ॰ १०,१६७,१ ।
(छ) ऋ॰ १०, १६८, १ ।

मयो भू(क)रिति यत्सूक्तमपश्यच्छबर(१) ऋषिः ।
नानारूपाः पयस्विन्यो गावस्तत्र तु संस्तुताः ॥७१॥
विभ्राट्(ख) सौर्य्यन्त्वनग(ग)मैन्द्रन्त्वायाही(घ)त्युषसः स्तुतिः ।
आ रा(ङ)राज्ञेऽभिपिप्राय(२)द्वे सूक्ते चानुमन्त्रणे ॥७२॥
मम (च)इत्युत्तरं यावद्दृदर्श स्तुतिमार्बुदिः(३) ।
यतः(४) परमाग्रेयं तत्रार्भवृक् प्रसूनवः(छ) ॥७३॥
अपिजेगौ पतङ्गस्तु पतङ्ग(ज)मिति यत्परम् ।
तत्सौर्य्यमेके मन्यन्ते मायाभेदं तथापरे ॥७४॥
मायाभेदे द्वितीयायां वाक् सूतेत्याह शौनकः ।
देवी विभ्रमति मनसापि वाचा विदिता सती(५) ॥७५॥
यमृत्वि(झ)ति तु सौपर्णं(६) सूक्तं स्वस्त्ययनं विदुः ।
उ(ञ)देन्द्रं वैश्वदेवन्तु प्रथश्चे(ट)ति च यत्परम् ॥७६॥

---

(१) शबरा इति क० ख० ग० ।
(२) अभिपिप्रायेति ग० ।
(३) आर्बुदः इति ख० ।
(४) यतत इति क० ग० घ० ।
(५) मायाभेदे द्वितीयायामित्यादि सा वाचा विदिता सतीत्यन्तपाठः क० ग० घ० ङ० चिह्नितपुस्तकेषु न दृश्यते ।
(६) तार्क्ष्यं वैश्वमिति ख० ।

---

(क) ऋ० १०, १६९, १। (ख) ऋ० १०, १७०, १। (ग) ऋ० १०, १७१, १।
(घ) ऋ० १०, १७२, १। (ङ) ऋ० १०, १७३, १। (च) ऋ० १०, १७४, १।
(छ) ऋ० १०, १७६, १। (ज) ऋ० १०, १७७, १। (झ) ऋ० १०, १७८, १।
(ञ) ऋ० १०, १७९, १। (ट) ऋ० १०, १८१, १।

आत्मप्रभावमाचख्युस्तथाद्या ऋषयस्तथ ।
रथन्तरं यथा स्तोत्रं स्तोत्रञ्चैव यथा बृहत् ॥७७॥
यथा च सम्भृतो घर्म्मः सवितुश्चोपलच्यते[१] ।
बृहस्पति[क]रिति त्वस्मिन् सूक्त सूक्ते बृहस्पति ॥७८॥
आग्निर्यो यजमानस्य केचिद्देता स्तुतिं विदु[२] ।
प्राजापत्यस्य यत् सूक्तमपश्य त्वा[ख]प्रजावत ॥७९॥
प्रत्यृच देवता स्तौति लिङ्गैरेवात्र देवता[३] ।
आशिष पुत्रकामस्य प्रथमा हि वदत्यथ ॥८०॥
द्वितीया पुत्रकामायास्तृतीयात्मस्तव[४]स्तुपे ।
यद्विष्णु[ग]रिति सूक्तन्तु वैश्वदेवं प्रचक्षते ॥८१॥
तस्मिन् स्वदारगर्भार्थमुपिराशास्त आशिष ।

---

(१) वादश्चैवात्र दृश्यते इति क० घ० च० ।

(२) बृहस्पतिरिति त्वस्मिन्नित्यादि केचिद्देवा स्तुतिं विदुरित्यन्तपाठः ख० चिह्नितपुस्तके न विद्यते । तत्र अस्मिन् सूक्ते, सूक्ते ऽस्मिन् देवतास्तिस्र एता एव प्रकीर्त्तिता इति श्लोकार्द्धं वर्त्तते ।

(३) एवार्थलच्चिता इति ख०, एष श्लोक क० घ० च० चिह्नितपुस्तकेषु नोपलभ्यते ।

(४) आत्मस्तवमिति ग० ।

---

(क) ऋ० १०,१८२,१ । (ख) ऋ० १०,१८३,१ । (ग) ऋ०१०,१८४,१ ।

परन्तु[१] नैजमेव हि[२] गभार्यं ताव[३]दुच्यते ॥८२॥
माश्चिच यन्महि चौणा[क]मादित्यानां स्तुति विदुः[४] ।
सूर्यवरुणमित्राणामादित्येष्वितरेषु तु[५] ॥८३॥
एत[६] एव चयो वाला स्तुता, खल्पेष्व[७]तोऽन्यथा ।
प्राग्यर्थं सूक्तमेतद्धि पावनं चैव विश्रुतम् ॥८४॥
पातमपि खस्त्ययने दृष्ट तदनुमन्त्रणम्[८] ।
उक्तोऽस्तौत्पितरं वातमाग्नेय माग्नये[ख] परम् ॥८५॥
विस्रष्ट जातवेदस प्रे[ग]ति दाशतयीषु[९] तु ।
यत्किञ्चिदेव ला[१०]ग्नेय जातवेदसमुच्यते ॥८६॥
आयङ्गौ[घ]रिति यत्सूक्तं सार्पराज्ञी[११]स्तथ जगौ ।

---

(१) यदे लिति ख० ।
(२) नैजमेवेतौति ख० ग० ।
(३) वा तदि क० घ० च० ।
(४) चादित्येष्वितरेषु लिति क० घ० च० ।
(५) एतच्छ्लोकार्द्धं क० घ० च० चिह्नितपुस्तकेषु नेक्ष्यते ।
(६) एक इति क० घ० च० ।
(७) खल्पेष्विति ख० ।
(८) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु न विद्यते ।
(९) दाशतयौष्विति ख० ।
(१०) चान्यत्रेति ख० ग० ।
(११) सर्पराज्ञौति क० घ० च० ।

---

(क) ऋ० १०, १८५, १ । (ख) ऋ० १०, १८७, १ । (ग) ऋ० १०, १८८, १ ।
(घ) ऋ० १०, १८६, १ ।

तस्मात् सा देवता(१) तत्र सूर्य्यमेके प्रचक्षते ॥८७॥
सुदास्स शाकपूणिश्च आचार्य्यश्च रथीतर(२) ।
चित्राभिधिष्ठिता वाच मन्यन्ते ह्यृच स्तुताम् ॥८८॥
भाववृत्तपर(३) सूक्त ददर्शाघमर्षण ।
पर न विद्यते तस्मात्स्नान्ये वा पावनाय वा ॥८९॥
यथाश्वमेध क्रतुराट् सर्व्वैरिप्रप्रणोदन(४) ।
तथाघमर्षण सूक्त सर्व्वैरिप्रप्रणोदन(५) ॥९०॥
तदादौर्म्मि(६) तु यच्चात सज्ञान ज्ञानमस्तव ।
चतुर्थं यत्तु नैर्ऋत्य तत्सपत्ननिवर्हणम्(७) ॥९१॥
सघमित्(क) साध्वराणाञ्चेत्याग्नेये एव ते स्तुते(८) ।

---

(१) तस्य स्याद्देवतेति क० ख० घ० च० ।
(२) आचार्य्य शाकटायन इति ख० ग० ।
(३) भाववृत्तमृतमिति क० घ० च० ।
(४) सर्व्वैरोप्रप्रणोदन इति ख० ।
(५) यथाश्वमेध क्रतुराट् इत्यादि सर्व्वैरिप्रप्रणोदनमित्यन्तपाठ क० घ० च० चिह्नितपुस्तकेषु नापश्यत ।
(६) त्वदादौर्नीति क० घ० च० ।
(७) चतुर्थस्त्वृक्तस्य यत्सपत्नीनिवर्हणमिति क० घ० च० ।
(८) उभे तत्राग्निदेवते इति क० घ० च० ।

---

(क) ऋ० १०, १९१, १ ।

उशना वरुणश्चेन्द्रश्चाग्निश्च सविता स्तुताः ॥८२॥
संज्ञानं प्रथमस्या[1]न्तु द्वितीयस्यामथाश्विनौ[2]।
तृतीया चोत्तमे च द्वे आशिषोऽभिवदन्ति ताः[3] ॥८३॥
इन्द्रः पूषा सपत्नघ्ने द्वितीयस्यामृचि स्तुतौ।
देवानामितराः प्रोक्ता आशीर्वादपराश्च याः[4] ॥८४॥
[5]महानाम्न्य ऋचो गुह्यास्ता ऐन्द्र्यश्चैव यो वदेत्।
सहस्रयुगपर्यन्तं सोऽहं ब्रह्म स राध्यते[6] ॥८५॥
[7]पुरीषपदमाद्यान्तु प्रथमं स्यात्प्रजापतेः[8]।

---

(१) प्रथमायामिति पाठ शुद्ध।
(२) उशना वरुणश्चेन्द्रइत्यादि द्वितीयस्यामथाश्विनावित्यन्तपाठ क॰ घ॰ च॰ चिह्नितपुस्तकेषु न दृश्यते।
(३) स ताशीर्वाद उच्यते इति क॰ घ॰ च॰।
(४) एष श्लोक क॰ घ॰ च॰ चिह्नितपुस्तकेषु नेष्यते।
(५) ख॰ चिह्नितपुस्तके महानाम्न्य इति श्लोकात्प्राक्, संवसंज्ञानमित्येते चैवमनं विदुरिति श्लोकार्द्धं वर्त्तते।
(६) राध्यतीति पाठ साधुः, सोऽहं प्राप्य स्वराध्यते इति क॰ घ॰ च॰, साह प्राप्य स्वरं ध्यायते इति ख॰।
(७) स्वमिदैवतमिति ख॰।
(८) ख॰ चिह्नितपुस्तके पुरीषपदमाद्यान्त्विति श्लोकात् प्राक्,—

> त्रिधाधर्मेयाश्चिकाः स्तुतास्त-
> स्मिन् स्तो दृश्यते च स्तुतमात्रा।
> प्रधानस्तुतं त्रिच देवतायां
> स्तुतभाग॰ सर्व्वेरा प्रोक्तेन॥

आग्नेयमैन्द्रं वैष्णव्यं पौष्णं दैवन्तु पञ्चमम्[१]।८६॥
अग्नेः प्रयाजानुयाजा प्रैषा ये च[२] हवींषि च।
यद्दैवतं हविस्तु स्यात्प्रैषास्तद्देवतास्तु[३] ते।८७॥
निविदो निगदाश्च स्वैः स्वैर्लिङ्गैश्च देवता[४]।
निगदैस्[५] निगद्यन्ते याश्च कल्पानुगा ऋचः॥८८॥
अग्नेरेव तु गायत्र्य उष्णिहः[६] सवितुः स्मृता।
अनुष्टुभस्तु सोमस्य बृहत्यस्तु बृहस्पतेः॥८९॥

---

ऐन्द्रा ऋचो मद्यनामतोऽस्तु विद्यात्
तथा हि इष्ट्वा ब्राह्मणसूक्तशब्द।
न ह्यत्र सूक्तशब्दो न विस्तु
यथा प्रैषेष्वाहुःसूक्ताभिधानम्॥
सूक्तैकदेशा इति तान् प्रतीयात्
दन्याश्च कुर्या मदशो निशम्य।
यचैतयो देवि निपादि सप्त
कुत्साये तत्पुनरेकं सूक्तम्॥
इत्यधिकपाठोऽस्ति।

(१) विन्द्र ता वैष्णवश्चैव पौष्णश्चैव मत पदमिति ख॰।
(२) एवति क॰ घ॰ च॰।
(३) चेति ख॰।
(४) लिङ्गोक्तदेवता इति क॰ ग॰ घ॰।
(५) निगदैश्चेति ख॰।
(६) उष्णिक इति ख॰, उष्णिहेति ग॰।

पङ्क्तयस्त्रिष्टुभश्चैव विद्यादैन्द्र्यश्च सर्व्वशः ।
विश्वेषां चैव देवानां जगत्यो यास्तु काश्चन ॥१००॥
विराजश्चैव मित्रस्य स्वराजो वरुणस्य च ।
विषये यस्य वा स्यातां स्यातां वा वायुदेवते ॥१०१॥
इन्द्रस्यातिधृतिः प्रोक्ता वायोश्च भुरिजः स्मृताः[1] ।
धातुस्त्वतिच्छन्दसः काश्चित्ताः प्रजापतिदेवताः[2] ॥१०२॥
विच्छन्दसस्तु वायव्या मन्त्राः पादैश्च ये मिताः ।
पौरुषा द्विपदाः सर्व्वा ब्राह्म्य एकपदाः स्मृताः[3] ॥१०३॥
समस्ता ऋच आग्नेय्यो वायव्यानि यजूंषि च ।
सौर्य्याणि चैव सामानि सर्व्वाणि ब्राह्मणानि च ॥१०४॥
वैश्वदेवो वषट्कारो हिङ्कारो ये यजामहे ।
रूपं वज्रस्य वाक्पूर्व्वं स्वाहाकारोऽग्निदेवतः ॥१०५॥
देवानाञ्च पितॄणाञ्च नमस्कारः स्वधैव[4] च ।
क्रुष्टो मूर्द्धनि विज्ञेयस्तालव्यः प्रथमः स्वरः ॥१०६॥
द्वितीयस्तु भ्रुवोर्मध्ये तृतीयः कर्णसंश्रितः ।
चतुर्थो नासिकाग्रे स्यादौरस्यो मन्द्र उच्यते ॥१०७॥

---

(१) एतच्छ्लोकार्द्धं क॰ घ॰ च॰ चिह्नितपुस्तकेषु न पठितम् ।
(२) एतच्छ्लोकार्द्धं ख॰ चिह्नितपुस्तके न दृश्यते ।
(३) द्विपदा पौरुषं छन्दो ब्राह्मी स्यैकपदा स्मृता इति ख॰ ।
(४) तथैवेति ख॰ ।

मन्द्रकर्षणपर्युक्तमतिस्वारं प्रयच्छति(१)।
वदन्ति देवता क्रुष्टं मनुष्यास्तितरैस्त्रिभिः(२) ॥१०८॥
द्वितीयं पशवः(३) सर्व्वे गन्धर्वाप्सरसः स्वरम्।
अण्डजाः पक्षिणः सर्पाश्चतुर्थमुपभुञ्जते(४) ॥१०९॥
मन्द्रं पिशाचा रक्षांसि असुराश्चोपभुञ्जते(५)।
अतिस्वारं(६) तु शेषस्य जङ्गमस्थावरस्य च ॥११०॥
वैश्वदेवस्वरः क्रुष्टो नित्यं यो मूर्ध्नि तिष्ठति(७)।
तालव्यः प्रथमः साम्नां स्वर आदित्यदैवतः(८) ॥१११॥
स्वरो द्वितीयः साध्यानां भ्रुवोर्देशश्रितश्च यः(९)।
आश्विनस्तु(१०) तृतीयोऽत्र स्वरः कर्णसमाश्रितः ॥११२॥
चतुर्थस्तत्र(११) वायव्यो नासिक्यः स्वर उच्यते।

---

(१) तु न विदुरिति ख०।
(२) सर्व्वा मनुष्या प्रथमं स्वरमिति ख०।
(३) पशवः इति ख० ग०।
(४) तूपभुज्यते इति क० घ० च०, चतुर्थंचोपभुञ्जते इति ख०।
(५) एतच्छ्लोकार्द्धं क० घ० च० चिह्नितपुस्तकेषु नोपलभ्यते।
(६) अतिस्वार्य्यं इति क० घ० च०, अतिवार इति ख०।
(७) ख० चिह्नितपुस्तके, वदन्ति देवता क्रुष्टमित्यादि नित्यं यो मूर्ध्नि तिष्ठतीत्यन्तं, द्वितीयस्तु भ्रुवोर्मध्ये इति श्लोकात् प्राक् पठितं।
(८) चेदन्य एव त्विति क० घ० च०।
(९) देश समाश्रित इति ख० ग०।
(१०) आग्नेयस्त्विति क० घ० च०।
(११) तेषु इति क० घ० च०।

पञ्चमस्तु स्वरः प्रोक्तश्चाक्षुषः सूर्य्यदेवतः[1] ॥११३॥
यस्तु सामस्वरः षष्ठः[2] स सौम्यो मन्द्र उच्यते ।
विकर्षेण तु मन्द्रस्य[3] युक्तोऽतिस्वार्य्य उच्यते ॥११४॥
स मैत्रावरुणो ज्ञेयो मन्द्रस्थानसमाश्रितः[4] ॥
सामस्वराणां सप्तानामेते देवा इहोदिताः[5] ॥११५॥
त्रयाणामितरेषां तु लोकाधिपतयस्त्रयः ।
वाग्देवत्योऽथ वाग्नेयः प्रस्तावश्चैव सामसु ॥११६॥
उद्गीथोपद्रवावैन्द्रौ स्यातां वा वायुदेवते ।
सौर्य्यः स्यात्प्रतिहारोऽथ निधनं वैश्वदेवतम् ॥११७॥
हिङ्कारप्रणवाख्यान्तु पुरस्तादेव कीर्त्तनात् ।
इति यज्ञसमस्तानां मन्त्राणामिह दैवतम् ।
देवताविद्वेदेत प्रयोगे सर्व्वकर्मणाम् ॥११८॥

सप्तर्षयो वसवश्चापि देवा
अथर्व्वाणो भृगवः सोमसूर्य्याः[6] ।

---

(१) सप्तप्रोक्ताश्चं क० ख० ग० चिह्नितपुस्तकेषु नास्त्यत्र ।
(२) षष्ठ इति क० ख० ग० ।
(३) कर्षणेनैव मन्द्रस्येति क० ख० ग०, विकर्षेण तु मन्द्रस्येति घ० ।
(४) मन्द्रस्थानसमाश्रिताः इति क० ख० ग०, मन्द्रस्थानसमाधि- ष्ठितेति घ० ।
(५) इति स्वराणां सप्तानामुक्ताः सामसु देवताः इति क० ख० ग० ।
(६) अंशोऽथांशा इति क० ख० ग० ।

पथ्यास्वस्ती रोदसी घोषमन्त्ये
कुहूर्गुङ्गुरदितिर्धेनुरघ्न्या ॥११९॥
असुनीतिरिळा वा धी(१) विधातानुमतिर्दया ।
अङ्गिरोभि सहैता सूक्तमन्त्रास्त देवता ॥१२०॥
वैश्वानरो हि(२) सुपर्णो विवस्वान्
प्रजापतिर्गौः सुधन्वा गमोध(३)।
अपा नपादर्य्यमा वातजूति-
रिलस्पतिश्चैव रथस्पतिश्च ॥१२१॥
ऋभव पर्ज्जन्य पर्व्वतामाश्च(४) पत्नी
दक्षो भगो(५) देवपत्नीर्दिशश्च ।
आदित्या रुद्रा पितरोऽथ साध्या
निपातिनो वैश्वदेवेषु सर्व्वे ॥१२२॥
अनुक्रान्ता देवता सूक्तभाजो
हविभाजश्चोभयथा निपाते ।
अथैव स्यादुभयथान्यथा वा
न प्रत्यक्षमनृषेरस्ति मन्त्र ॥१२३॥

---

(१) स्यादिति ख॰ ग॰ ।
(२) द्यौ सुधन्वा गोध्य इति क॰ घ॰ च॰, न नद्य इति ग॰ ।
(३) अपीति ख॰ ग॰ ।
(४) वा गावश्चेति क॰ घ॰ च॰ ।
(५) भर्गः इति ग॰ ।

योगेन दाक्ष्येण दमेन बुद्ध्या
वाक्श्रुत्येन तपसा नियोगैः(१)।
उपास्तव्याः(२) कृत्स्नशो देवता या(३)
ऋचो ह यो वेद स वेद देवान्।
यजूंषि यो वेद स वेद यज्ञान्
सामानि यो वेद स वेद तत्त्वं ॥१२४॥

अग्नौ मे पुत्रकामाया अब्दादर्द्धं च त(४)त्कृतम्।
आशिषो योगमेतं हि वाग्नौ गोर्येन(५) मन्यते ॥१२५॥
एकारमनुकम्पार्थं नाम्नि स्मरति माठरः।
आख्यातभूतकरणं(६) वाष्कुला स्त्री ययो हत ॥१२६॥
मन्त्राणां देवताविद्यः प्रयुङ्क्ते कर्म कर्हिचित्।
जुषन्ते देवतास्तस्य(७) हवि(८)र्ना(९)देवताविदः ॥१२७॥
अविज्ञानप्रदिष्टं(१०) हि हविर्नाश्नन्ति देवताः।

---

(१) अभियोगैरिति ख०।
(२) उपास्यास्ताः इति ख० ग०।
(३) दैवतस्येति क० ग० घ०।
(४) स वागर्द्धेन यदिति क० ग० घ०।
(५) बद्धो गौर्वैन्निति ख०।
(६) व्याख्याते भूतकरणमिति ख०।
(७) स्वस्येति ग०।
(८) हविर्व्वेति ख०।
(९) नेति क० ग० य० घ०।
(१०) अविज्ञातप्रदिष्टमिति क० ग० घ०।

तस्मान्मनसि मन्त्रस्य देवता जुहुयाद्धवि ॥१२८॥
स्वाध्यायमेव[1] योऽधीते मन्त्रदैवतविच्छुचि ।
स सत्रसदिव [2]स्वर्गे सत्रसद्भिरपीज्यते[3] ॥१२९॥
नियमोऽयं जपे होमे ऋषिच्छन्दोऽथ दैवतम् ।
अन्यथा चेत् प्रयुञ्जानस्तत्फलाच्चाव हीयते ॥१३०॥
ऋषिच्छन्दोदैवतादिज्ञानं यज्ञादिषु श्रुतम् ।
तदाश्रित्य प्राणवृष्टिर्विहितार्चेति गम्यताम् ॥१३१॥
अविदित्वा ऋषिच्छन्दोदैवतं योगमेव च ।
योऽध्यापयेज्जपेद्वापि पापीयान् जायते तु सः ॥१३२॥
अर्थेप्सव ऋषयश्छन्दोभिर्देवता पुरा ।
अभ्यधावन्निति छन्दो मध्ये त्वाङ्कर्मदर्शय ॥१३३॥
ऋषिन्तु प्रथमं ब्रूयाच्छन्दस्तु तदनन्तरम् ।
देवतामथ मन्त्राणां कर्मस्वेवमिति श्रुतिः ॥१३४॥
आत्मस्थं वा अनात्मस्थं[4] विविच्यात्मानमात्मनि ।
ईक्षमाणो ह्युभौ सन्धिमृचो दैवतवित्पठेत् ॥१३५॥
स ब्रह्मामृतमत्यन्तं योनिं सदसतोर्ध्रुवम् ।
महच्चाणु च विश्वेश विशति ज्योतिरुत्तमम् ॥१३६॥

इति शौनकाचार्यकृतायां बृहद्देवतायामष्टमोऽध्यायः ॥

समाप्ता बृहद्देवता ॥

---

(१) उतेति क० ख० च० ।
(२) घसघसदपीति ग० ।
(३) अपीष्यते इति क० ख० च० ।
(४) आत्मानं वाप्यनभ्रारमिति ख०, आत्मानं वाप्यनाधारमिति ग० ।

श्रीः

# अथार्षानुक्रमणी ।

## प्रथमं मण्डलम् ।

ऋग्वेदमखिलं ये हि द्रष्टारो मुनिपुङ्गवाः ।
तदनुक्रमणायाहं नमामि परमेश्वरीम् ॥१॥
अथाग्निमीळ इत्यादि प्रथमं मण्डलं प्रति ।
शतर्चिनस्तु विज्ञेया ऋषयः सुखसिद्धये ॥२॥
तेषां पूर्वो मधुच्छन्दा मेधातिथिरनन्तरः ।
शुनःशेपस्तृतीयोऽयं हिरण्यस्तूप उत्तरः ॥३॥
कण्वस्तु पञ्चमः षष्ठः प्रस्कण्वः सव्य उत्तरः ।
नोधाः पराशरश्चान्यो गोतमः कुत्स उत्तरः ॥४॥
काश्यपस्त्वथ कक्षीवान् परुच्छेपस्तदुत्तरः ।
दीर्घतमास्ततोऽगस्त्यः षोडशैते शतर्चिनः ॥५॥
ऋचां शतानि दृष्ट्वा(क)ऽत एव शतर्चिनः ।
ऊनादीनान्तु तथापि तथाप्येते शतर्चिनः ॥६॥

---

(क) शतानां दृष्ट्वादिति पाठो भवितुमर्हति ।

तत्र त्वादित आरभ्य सूक्तानां दशकं प्रति ।
वैश्वामित्रो[क] मधुच्छन्दा ऋषिरित्यवगम्यताम् ॥७॥
इन्द्र विश्वा(११)[ख] इति तस्य जेता तस्य सुतो मुनिः ।
अग्निं दूत(१२)मुपक्रम्य सूक्तादादशकं प्रति ॥८॥
काण्वो मेधातिथिर्नाम मुनिरित्यवगम्यताम् ।
कस्य नून(२४)मुपक्रम्य सूक्तानां सप्तकं प्रति ॥९॥
आजीगर्त्तिं शुनःशेप ऋषिरित्यवगम्यताम् ।
अयन्तु देवराताख्यो वैश्वामित्रस्य कृत्रिमः ॥१०॥
त्वमग्न(३१) इत्युपक्रम्य सूक्तानां पञ्चकं प्रति ।
हिरण्यस्तूपनामायमृषिराङ्गिरसः सुतः ॥११॥
प्र वो यह्व(३६)मुपक्रम्य सूक्तानामष्टकं प्रति ।
घोरस्य पुत्रः कण्वोऽयमृषिरित्यवगम्यताम् ॥१२॥
[ग] अभित्य मेष(५१)मित्यादिसूक्तानां सप्तकं प्रति ।
सव्यो हि नामाङ्गिरस ऋषिरित्यवगम्यताम् ॥१३॥
नू चित्सहोजा(५८) इत्यादि सूक्तानां सप्तकं प्रति ।
गोतमस्य सुतो नोधा ऋषिरित्यवगम्यताम् ॥१४॥

---

(क) विश्वामित्र इति क० ।

(ख) (११) चिह्नेनानेन सूक्तसङ्ख्या परिच्छेद्या । एवं परत्रापि । मन्त्रसङ्ख्या तु मूलत एवावगम्यताम् ।

(ग) अथ विवस्वद्(४४)आदि सूक्तानां सप्तकं प्रति ।
कण्वस्य पुत्रः प्रस्कण्व ऋषिरित्यवगम्यताम् ।

इत्येवं श्लोकोऽस्मात् पूर्वं भवितुमर्हति । सर्वानुक्रमण्यादौ तथैवोपलम्भात् ।

पश्या न तायु(६५)मित्यादिसूक्तानां नवकं प्रति ।
शाक्त्यः पराशरो नाम ऋषिरित्यवगम्यताम् ॥१५॥
उपप्रयन्त(७४) इत्यादिसूक्तानां विंशतिं प्रति ।
राहूगणो गोतमो(क)ऽयमृषिरित्यवगम्यताम् ॥१६॥
इमं स्तोम(९४)मुपक्रम्य सूक्तानां पञ्चकं प्रति ।
कुत्सो हि नामाङ्गिरस ऋषिरित्यवगम्यताम् ॥१७॥
जातवेदस(९९) इत्यस्मिन् मारीचः काश्यपो मुनिः ।
स यो वृषे(१००)ति सूक्तस्य ऋषयो वार्षागिराः ॥१८॥
ऋज्राश्वः प्रथमस्तेषां भयमानसुराधसौ ।
सहदेवोऽम्बरीषश्च तेऽत्र सूक्ते प्रकीर्त्तिताः ॥१९॥
चन्द्रमा(१०५) इति सूक्तस्य त्रित आप्त्योऽथवा ऋषिः ।
नासत्याभ्या(११६)मुपक्रम्य सूक्तेष्वेकादशस्वथ ॥२०॥
कक्षीवान् दैर्घतमस औशिक्सूनुः स एव च ।
भावयव्यस्तु राजायमृषिरा गधिते(१२६,६)त्यृचः ॥२१॥
तद्भार्या रोमशा नामोपोत्तमस्या उपोत्तमे ।
अग्निं होतार(१२७)मित्यादिसूक्तेष्वेव चयोदश ॥२२॥
दैवोदासिः परुच्छेपो राजैवायमृषिस्ततः ।
वेदिषदे(१४०)प्रभृतीनां सूक्तानां पञ्चविंशतेः ॥२३॥
दीर्घतमा नामौचथ्य ऋषिरित्यवगम्यताम् ।
कया शुभेतिसंवाद इन्द्रादीनां हि तच [illegible] ॥२४॥

(क) गौतम इति ग० ।

कया शुभे(१६५)त्युपक्रम्य सूक्तमासामृचां पुनः ।
एकादश्या(क)स्त्वयमिन्द्र ऋषिरित्यवगम्यताम् ॥२५॥
ऋषयो मरुतस्तत्र तृतीयाद्युग्मामृचाम् ।
सूक्तस्यान्त्ये तृचेऽगस्त्य ऋषिरित्यवगम्यताम् ॥२६॥
अगस्त्य एव तस्मा(१६९)दिन्द्रमित्रावरुणयो(ख) स्तुत ।
षड्विंशतेश्च सूक्तानामृषिरित्यवगम्यताम् ॥२७॥
इन्द्रागस्त्ययो संवादो न नून(१७०)मिति तच तु ।
प्रथमायास्तृतीयाया ऋचोरिन्द्र ऋषि स्वयम् ॥२८॥
उभौ वाथ चतुर्थ्यास्तु तयोरन्यतरोऽथवा ।
पूर्वी(१७९)रिति च सूक्तस्य संवादस्तु तृचास्त्रय ॥२९॥
लोपामुद्रा तृचे पूर्वे अगस्त्यो मध्यमे तृचे ।
अन्तेवासी ब्रह्मचारी सूक्तस्यान्ते तृचे मुनि ॥३०॥

इति प्रथमं मण्डलम् ।

---

(क) एकादश्या इति क० ।
(ख) तस्मादिन्द्रमित्रावरुणयोरिति ग० घ० ।

# अथ द्वितीयं मण्डलम् ।



मध्यमेष्वृषयो ज्ञेया मण्डलेष्वथ मध्यमाः ।
तत्र त्वमग्न(१) इत्यादिद्वितीयं मण्डलं प्रति ॥१॥
ऋषिर्गृत्समदो नाम विज्ञेयः स च शौनकः ।
औरसः शुनहोत्रस्य शुनकस्यैव कृत्रिमः ॥२॥
तस्मादाङ्गिरसः पूर्वं पश्चाच्च भृगुतां गतः ।
हुवे व(४) इति सूक्तानां तत्रापि च चतुष्टये ॥३॥
सोमाहुतिर्भार्गवोऽयमृषिरित्यवगम्यताम् ।
इमा गिर(२७) उपक्रम्य सूक्तानां त्रितयं प्रति ॥४॥
ऋषिः कूर्मो गार्त्समदः स्वयं गृत्समदोऽथ वा ॥५॥

इति द्वितीयं मण्डलम् ।



## अथ तृतीयं मण्डलम् ।



सोमस्य मे(१)त्युपक्रम्य तृतीयं मण्डलं प्रति ।
विश्वामित्र इति ज्ञेयः स च गाथिसुतः[क] स्मृतः ॥१॥
ऋषभो द्वे प्र व (१२) सूक्ते विश्वामित्रसुतो जगौ ।
विपाजवे(१५)ति सूक्ते द्वे कात्योत्कीलऋषिर्जगौ ॥२॥
समिध्यमानो(१७) द्वे सूक्ते वैश्वामित्रः कतो जगौ ।
अग्नि होतार(१८)मारभ्य गाथी नाम स कौशिकः ॥३॥
सूक्तान्यपश्यच्चत्वारि सूक्ते निर्मथिते परे ।
देवश्रवोदेववातावृषी एतौ हि भारतौ ॥४॥
कुशिकः प्राचदि(२१)त्यस्मिन्निषीरथसुतो मुनिः ।
अथवा मण्डलद्रष्टा विश्वामित्रो यथा श्रुतिः[ख] ॥५॥
प्र पर्वताना(३३)मित्यस्मिन् विपाड्ित्येवमादिभिः ।
नदीभिः सह संवादो विश्वामित्रस्योत्तितीर्षोः ॥६॥
अष्टमी दशमी षष्ठी चतुर्थी च नदीवचः ।
शिष्टा या नवसूक्तस्य विश्वामित्रवचांसि ताः ॥७॥
अग्ने प्रथन्वी(२९,१०)त्येतस्यां घोर आङ्गिरसो मुनिः ।

---

(क) गाथीसुत इति क० ।

(ख) मुनिरिति ख० ।

(२९,१०) चिरेणानव सप्तमदृष्टा अष्टकसहृष्टा च अवगन्तव्या । एव मर चापि।

निर्दिश्यमानेऽपि श्रूयते[क] सा न शस्यते ॥८॥
अभि तष्टेव(२८) सूक्तस्य वैश्वामित्रः प्रजापतिः ।
वाच्यो वा स उभौ वा तौ विश्वामित्रोऽथवा श्रुतेः ॥९॥
इमं मह(२९) उपक्रम्य सूक्तानां त्रितयं प्रति ।
अयमेव ऋषिर्विद्यादुक्तगोत्रः प्रजापतिः ।
भार्गवो जमदग्निर्वा मण्डलान्त्ये तृचेऽप्यृषिः ॥१०॥

इति तृतीयं मण्डलम् ।

---

(क) शस्यमानेति श्रूयते इति ख० ।

## अथ चतुर्थं मण्डलम् ।

त्वां ह्यग्ने सद(१)मित्यादि चतुर्थं मण्डलं प्रति ।
गौतमो वामदेवो(क)ऽस्यर्षिरित्यवगम्यताम् ॥१॥
अयं पन्थास्तु संवाद इन्द्रादेः सूक्तमच तु ।
अयं पन्था(१८) इति त्वस्या ऋच इन्द्रः स्वयं मुनिः ॥२॥
वामदेवस्तु पञ्चानामर्द्धर्चानां ततः परम् ।
न हि न्वस्या(१८,४)दित्यन्यासामर्द्धर्चानां तथादितिः ॥३॥
ममच्चन त्वे(१८,८)त्यादीनामृचां पञ्चानां एव [illegible] ।
वामदेव ऋषिर्विद्यादृचाप्येव विशेषतः ॥४॥
त्रसदस्युः पौरुकुत्स्य ऋषिः सूक्ते मम द्विता(४२) ।
क उ श्रव(ख)(४३)दिति त्वस्य तथा तस्योत्तरस्य च ।
पुरुमीळ्होऽजमीळ्हश्च(ग) सौहोत्रौ तावृषी वद ॥५॥

इति चतुर्थं मण्डलम् ।

---

(क) गौतमो वामदेवोऽस्येति ज० ।
(ख) मोक्षमूलरसम्पादित ऋग्वेदे क उं श्रवदिति पाठोऽस्ति ।
(ग) पुरुमीळ्होऽजमीळ्हेति ज० ।

## अथ पञ्चमं मण्डलम् ।

अबोध्यग्निरुपक्रम्य पञ्चमं मण्डलं प्रति ।
पुत्राद्यैः सह भौमोऽत्रिर्मुनिरित्यवगम्यताम् ॥ १ ॥
अत्र तत्क्रमगोत्रा ये ज्ञेयास्तत्त्रिसुता इति ।
अबोध्यग्नि(१)रिति तस्मिन्नृषी बुधगविष्ठिरौ ॥ २ ॥
कुमार(२)मिति चैतस्मिन् कुमारो वा वृषोऽथवा ।
वृषो जार(क) इति ज्ञेय उभौ वाथ समुच्चितौ ॥ ३ ॥
कमेत(२,३)मिति चैतस्यां तथा विश्वोतिपे(२,९)त्यृचि ।
वृष एव ऋषिर्विद्यात्र विकल्पसमुच्चयौ ॥ ४ ॥
त्वमग्न(३) इति सूक्तेषु चतुष्केषु वसुश्रुतः ।
सखायः सं व(७) इत्यस्मिन्निषस्तस्योत्तरेऽपि च ॥ ५ ॥
त्वामग्न(८) इति चैतस्मिन् गयस्तस्योत्तरेऽपि च ।
जनस्य गोपाः(११) सूक्तेषु चतुष्केषु सुतम्भरः ॥ ६ ॥
प्र वेधस(१५) इति तस्मिन् धरुणोऽङ्गिरसः सुतः ।
वृहद्वय(१६) इति तस्मिन् पुरु(ख)स्तस्योत्तरेऽपि च ॥ ७ ॥
प्रातरग्नि(१८)रिति तस्मिन्मृक्तवाहा द्वितो मुनिः ।
अभ्यवस्था(१९)यमग्ने (२०)च सूक्तयोरेतयोर्मुनिः ॥ ८ ॥

(क) जार इति सर्वानुक्रमण्यां दृश्यते ।
(ख) पूरुरिति सर्वानुक्रमण्यामुपलभ्यते ।

वव्रिर्नाम मुनिः पूर्वं प्रयस्वन्तस्तदुत्तरे ।
मनुष्वत्त्वे(२१)ति सूक्तस्य ससो नाम मुनिः स्मृतः ॥ ८ ॥
प्र विश्वसाम(२२)न्नित्यस्य विश्वसामेत्यृषिः स्मृतः ।
अग्ने सहन्त(२३)मित्यस्य द्युम्नोऽस्य विश्वचर्षणिः ॥ १० ॥
अग्ने त्व(२४) सूक्तमेकर्चा द्विपदा विद्यते क्रमात् ।
विप्रबन्धुः श्रुतबन्धुः सुबन्धुर्बन्धुरित्यमी ॥ ११ ॥
गौपायना इमे ज्ञेया आद्या गौपायना[क] इति ।
अग्निरच्छा व(२५) [ख]इत्यस्मिन्नुत्तरे च वसूयवः ॥ १२ ॥
अनस्वन्ते(२७)ति सूक्तस्य त्रैवृष्णपुरुकुत्सजौ ।
त्र्यरुणत्रसदस्यू द्वावश्वमेधश्च भारत ॥ १३ ॥
अन्त्यानां तिसृणामेषां पूर्व्वासामितरो यह ।
अथवा भौम एवात्रिस्तृयिरत्र न प्रस्तते[ग] ॥ १४ ॥
दानक्रियायमेकस्य दातृत्वदातृता यतः[घ] ।
समिद्धो अग्नि(२८)रित्यस्मिन् विश्ववारात्रिगोत्रजा ॥ १५ ॥
त्र्यर्यमे(२९)त्यस्य सूक्तस्य गौरिवीतिः स शाक्तिजः ।
क्वस्य वीरः क(३०) इत्यस्य बभ्रुर्नाम ऋषिः स्मृतः ॥ १६ ॥
इन्द्रो रथाय(३१)सूक्तेऽस्मिन्नवस्यु[ङ]र्नाम सस्मृतः ।

---

(क) लौपायना इति सर्व्वानुक्रमणी ।
(ख) मोक्षमूलरसम्पादित ऋग्वेदे, अच्छ व इति पाठोऽस्ति ।
(ग) प्रश्वते इति स० च० ।
(घ) दानक्रियेयमेकस्य दातृत्वादातृता यत इति पाठ सम्भवितुमर्हति ।
(ङ) गावस्युरिति सर्व्वानुक्रमणी ।

अदर्दरुत्स(२१)मित्यस्य गातुनाम मुनि स्मृत ॥१७॥
प्राजापत्य सवरण सूक्ते महि महे (२६)जगौ ।
प्रभुवसु[क]राङ्गिरसो यत्ते साधिष्ठ(२५) इत्युभे ॥१८॥
सम्भानुने(२७)त्युपक्रम्य सूक्तानां सप्तकं प्रति ।
अचिरेव स्वय भौम ऋषिरित्यवगम्यताम् ॥१९॥
त प्रत्नथे(४४)ति सूक्तेऽस्मिन्नवत्सारो हि काश्यप ।
अन्येश्च दशभि साकमृषिरित्यवगम्यताम्[ख] ॥२०॥
सदापृणो यजतो[ग]स्य बाहुवृक्त सुतम्भर ।
श्रुतवित्तर्य्यनामा च एवावदो मनस ॥२१॥
ततसभो इमे चान्ये दृष्टलिङ्गा हि सूक्तके ।
विदा दिव(४५) इति तस्मिन्नृषिरेव सदापृण ॥२२॥
ऋयो न विदा(४६)नित्यस्मिन् प्रतिक्षत्र ऋषि स्मृत ।
प्रयुञ्जती(४७)ति सूक्तेऽस्मिन्नृपि प्रतिरथ स्मृत ॥२३॥
कदू प्रियाय(४८)सूक्तेऽस्मिन् देव व(४९) इति चोत्तरे ।
ऋषि क्रमेण विज्ञेय प्रतिभानु प्रतिप्रभु[घ] ॥२४॥
विश्वो देवस्य(५०) सूक्तस्य तथैवाग्ने सुतस्य(५१) च ।
उभयोरनयोरेव स्वस्त्यात्रेय इति स्मृत ॥२५॥

---

(क) प्रभूवसुरिति सर्वानुक्रमणी ।
(ख) एष श्लोक, ज० चिह्नितपुस्तके, सम्भानुनेत्युपक्रम्येति श्लोकात् प्राक् पठित ।
(ग) यजत इति पाठ सङ्गत । सदापृणो यजताविति ग० ।
(घ) प्रतिप्रभ इति सर्वानुक्रमणी ।

प्र श्यावाश्व(६१) उपक्रम्य दशसूक्तेष्वतः परम् ।
श्यावाश्वो मरुतां स्तोता मुनिरित्यवगम्यताम् ॥२६॥
ऋतेन ऋत(६२)मित्यस्य सूक्तेऽयं[क] श्रुतविन्मुनिः ।
ऋतस्य गोपा(६३)वित्यस्मिन् वरुणं व (६४) इतीह च ॥२७॥
अर्चनाना ऋषिर्विद्याद्यश्चिकेते(६५)ति सूक्तयोः ।
रातहव्योऽथ यजतो बळित्थेति(६७) च सूक्तयोः ॥२८॥
उरुचक्रिर्बाहुवृक्तः पौरस्त्वैव द्वयोर्द्वयोः ।
प्रति प्रियतमं(७५) सूक्तमवस्युर्दृष्टवान्मुनिः ॥२९॥
अत्रिरेव मुनिर्भौम आ भात्यग्नि(७६)रिति द्वयोः ।
अश्विनावेह(७८) सूक्तस्य सप्तवध्रिस्तु ऋषिः स्मृतः ॥३०॥
सत्यश्रवा ऋषिर्नाम महे नो अद्य(७९)सूक्तयोः ।
युञ्जते मन(८१) इत्यत्र श्यावाश्वः सूक्तयोर्ऋषिः ॥३१॥
अत्रिरच्छा वदे(८३)[ख]त्यादिचतुःसूक्तेष्वृषिः स्वयम् ।
मण्डलान्त्यस्य सूक्तस्य प्र व(८७) इत्येवयामरुत् ॥३२॥

इति पञ्चमं मण्डलम् ।

---

(क) चेति च० ।

(ख) मोक्षमूलरसम्पादित ऋग्वेदे सर्वानुक्रमण्याञ्च अच्छ वदेति पाठो वर्त्तते ।

# अथ षष्ठं मण्डलम्।

त्वं ह्यग्न इत्युपक्रम्य षष्ठाख्यं मण्डलं प्रति।
बार्हस्पत्यो भरद्वाज ऋषिरित्यवगम्यताम् ॥ १ ॥
तत्राप्यन्ये भरद्वाजादृश्यन्ते येऽपवादतः।
तेषामनुक्रमोक्तास्तु विज्ञेयास्तत्सुता इति ॥ २ ॥
इममू षु (१५) इत्यस्य सूक्तस्याङ्गिरसः सुतः।
वीतहव्यो विकल्पेन मुनिरित्यवगम्यताम् ॥ ३ ॥
अभूरेक(३१)स्त्वपूर्व्ये(३२)ति सुहोत्रः सूक्तयोर्ऋषिः।
शुनहोत्रो य ओजिष्ठः(३३) सं च त्वे(३४) चेति सूक्तयोः॥ ४॥
कदा(३५) सत्राम दास(३६)स्तु सूक्तयोरनयोर्नरः।
ऋषिर्यो रयि व(४५)स्त्वादिसूक्तानां त्रितयं प्रति ॥५॥
यज्ञा यज्ञीय(४८)सूक्ते च शंयुः पुत्रो बृहस्पतेः।
स्वादुष्किलाय(४७)मित्यस्य गर्गो नाम ऋषिः स्मृतः ॥६॥
स्तुषे जन(४९)मुपक्रम्य चतुःसूक्तेष्वयं मुनिः।
ऋजिश्वा ये सुहोत्राद्याः पौत्रास्चैते बृहस्पतेः ॥ ७ ॥
जीमूत(७५)सूक्ते पायुस्तु भारद्वाज ऋषिः स्मृतः।
उक्तापवादविषयादितरत्रात्र मण्डले।
स्वयमेव भरद्वाज एवं सर्व्वत्र गम्यताम् ॥ ८ ॥

इति षष्ठं मण्डलम्।

---

## अथ सप्तमं मण्डलम् ।

---

अग्निं नर इति त्वेतत्सप्तमं मण्डलं मति ।
ऋषिर्वसिष्ठो विज्ञेयो मित्रावरुणयोः सुतः ॥ १ ॥
इन्द्र क्रतुं न (३२,२६) इत्यस्मिन्नर्द्धर्चे मो षु (३२) सूक्तके ।
वसिष्ठपुत्रः शक्तिर्वा वसिष्ठो वा स्वयं मुनिः ॥ २ ॥
श्वित्यञ्च(३३) इति सूक्तस्य नवानामादितस्तृचां ।
वसिष्ठ एव पश्चानां विद्युतो ज्योति(३३,१०)रित्यृचाम् ॥ ३ ॥
वसिष्ठपुत्रा इन्द्रो वा ऋषिरित्यवगम्यताम् ।
तिस्रो वाच(१०१) इति त्वस्मिन् पर्ज्जन्याये(१०२)ति चोत्तरे ।
अग्निपुत्रः कुमारो वा वसिष्ठो वा स्वयं मुनिः ॥ ४ ॥

इति सप्तमं मण्डलम् ।

---

## अथाष्टमं मण्डलम्।

मा चिदन्यदिति(१)ष्वेतदष्टमं मण्डलं प्रति ।
प्रगाथाद्यृषयो ज्ञेयाः शृणु वक्ष्यामि तानिह ॥ १ ॥
अनुक्रमोक्तो यस्त्वत्र मण्डले लक्ष्यते मुनिः ।
स तु काण्व इति ज्ञेयः प्राङ्मत्स्यात्सांमदादृषेः ॥ २ ॥
मण्डलाद्यद्वृचस्यायं प्रगाथो घोरजो मुनिः ।
स हि घोरस्य कण्वस्य भ्राता सन् पुत्त्रतां गतः ॥ ३ ॥
मेधातिथिः परस्तस्मात्स मेध्यातिथिना सह ।
यच्चिद्धि त्वे(१,२)त्यृचामासामृषिरासप्रविंशतेः ॥ ४ ॥
स्तुहि स्तुही(१,१०)त्याद्यानामृचां चतसृणामृषिः ।
प्रयोग[क]पुत्त्र आसङ्गस्तस्य पत्नी तु शश्वती ॥ ५ ॥
अन्वस्य स्थूर(१,३४)मित्यस्याः सा च त्वङ्गिरसः सुता ।
मेधातिथिप्रियमेधावृषी सूक्ते इदं वसो(२) ॥ ६ ॥
आङ्गिरसः प्रियमेधस्त्वत्र मेधातिथिर्मुनिः ।
प्रिया वि भिन्दो[ख](२,४१) इत्यस्य द्वृचस्यान्यस्य केवलम्॥७॥
पिबा सुतस्य(३)[ग] सूक्तस्य मेधातिथिर्ऋषिः स्मृतः ।
यदिन्द्र प्रागपाक्(४) सूक्ते देवातिथिर्मुनिः स्मृतः ॥ ८ ॥

---

(क) प्रयोग इति सर्वानुक्रमण्यौ ।

(ख) मोक्षमूलरसम्पादित ऋग्वेदे प्रिय वि भिन्दो इति पाठोऽस्ति।

(ग) मोक्षमूलरसम्पादित ऋग्वेदे सर्वानुक्रमण्याञ्च पिब सुतस्येति पाठो वर्त्तते ।

दूरादिहेव(५) सूक्तस्य ऋषिर्मेध्यातिथिस्ततः(क) ।
महाँ इन्द्रो य(६)इत्यस्मिन् वत्सो नाम ऋषिः स्मृतः ॥ ८ ॥
प्र यद्वस्त्रिष्टुभं(७) सूक्ते पुनर्वत्स ऋषिः स्मृतः ।
आ नो विश्वाभि(८)रित्यस्मिन् सध्वंसो नाम संस्मृतः ॥ १० ॥
आ नूनमश्विने(९)त्यस्मिञ्छशकर्ण ऋषिः स्मृतः ।
यत्स्थ(१०) इत्यस्य सूक्तस्य प्रगाथो नाम संस्मृतः ॥ ११ ॥
त्वमग्ने व्रतपाः(११) सूक्ते वत्स एव मुनिः स्मृतः ।
ऋषिर्य इन्द्र(१२) सूक्तस्य पर्वतो नाम संस्मृतः ॥ १२ ॥
इन्द्रः सुतेषु(१३) सूक्तस्य नारदो मुनिरेव सः ।
यदिन्द्राह(१४)मिति तम्वभिप्र(१५)मित्युत्तरेऽपि च ॥ १३ ॥
गोषूक्तौ चाश्वसूक्ती च ऋषी एतौ काण्वायनौ ।
प्र सम्राज(१६)मिति त्रीणि सूक्तान्यैरिम्बिठिर्जगौ ॥ १४ ॥
तं गूर्द्धये(१८)ति चत्वारि ऋषिः सूक्तानि सोभरिः ।
ईळिष्व हि(१९)त्युपक्रम्य चतुःसूक्तेष्वतः परम् ॥ १५ ॥
ऋषिर्विश्वमना नाम स वैयश्व इतिः स्मृतः ।
एषां चतुर्थे सूक्ते तु व्यश्वो वाङ्गिरसो मुनिः ॥ १६ ॥
अग्निरुक्थे(२७) उपक्रम्य पञ्चसूक्तेष्वतः परम् ।
मनुर्वैवस्वतो नाम ऋषिरित्यवगम्यताम् ।
एषां तु मध्यमे सूक्ते मारीचो वाथ कश्यपः ॥ १७ ॥
मेधातिथिस्तु प्रकृतानि(३२) सूक्तं
मेधातिथिस्तथ वयम्(३३)सूक्तम् ।

---

(क) स्तुत इति अ० ।

नीपातिथिः सूक्तमयेन्द्र याहि(३४)
द्वचं तथान्त्यं वसुरोचिषस्य ॥१८॥
सहस्रमेतेऽङ्गिरसो ह्यपत्यं-
स्ततोऽग्निनेन्द्रेण(३५) ततोऽविते(३६)ति ।
चतुर्षु सूक्तेष्वत उत्तरेषु
श्यावाश्वनामा मुनिरत्रिगोत्रः ॥१९॥

अग्निमस्तोषि(३९)सूक्तेषु नाभाकोऽथ चतुर्ष्वृषिः ।
एषां चतुर्थे सूक्ते वा तस्य चान्त्ये तृचेऽथवा ॥२०॥
आर्चेयस्त्वर्चनाना वा मुनिरित्यवगम्यताम् ।
इमे विप्रस्य(४३) सूक्तेऽस्मिन् समिधाग्नि(४४)मितीह च ॥२१॥
विरूपोऽङ्गिरसः पुत्रस्त्रिश्लोकस्तत उत्तरे ।
सूक्ते त्वावत(४६) इत्यस्मिन्नस्य पुत्र ऋषिर्वशः ॥२२॥
महि वो महता(४७) सूक्ते ह्याप्त्यस्त्रित ऋषिः स्मृतः ।
स्वादोरभक्षि(४८)सूक्तस्य प्रगाथाख्य ऋषिः स्मृतः(क) ॥२३॥

---

(क) अत. परं, एकादश सूक्तानि मोक्षमूलरसम्पादितऋग्वेदे समुपलभ्यन्ते। तानि तु सायणेन न व्याख्यातानि। अथापि च तेषां न ऋषिनिरूपणमस्ति। किन्तु सर्वानुक्रमण्यां तत्र तत्र ऋष्युल्लेखो दृश्यते। यथा, अभि प्र(४९) दस्म प्रस्कस्य * * * *। प्रसृतं(५०) पुष्टिगुः। यथा मनौ (५१) श्रुष्टिगुः। यथा मनौ (५२) आयुः। उपमं त्वा(५३)दृष्टौ मेध्यः। एतत्ते (५४) मातरिश्वा * *। भूरीत् (५५) पञ्च कृशः * * * *। प्रति ते (५६) पृषध्रः * * * *। युवं देवा (५७) . . . . . . . . . . . . . . .

क्रमणिकाविवरणे तु सूक्तानामेषामृषिनिरूपणमुपलभ्यते।

अग्न आयाहि(१०) सूक्तस्य तथा तस्योत्तरस्य च।
भर्गः प्रगाथपुत्रोऽयमृषिरित्यवगम्यताम् ॥२४॥
प्रगाथ एव प्रो अस्मै(१२) सूक्तेष्वेषु चतुर्ष्वृषिः।
तरोभि(११)रितिसूक्तस्य प्रगाथतनयः कलिः ॥२५॥
सूक्ते लिङ्ग त्यान्न्वि(१७)ति वामदेवो वा
मत्स्यो मुनिस्तत्सद्वारिणो वा।
जालेन नद्धा[क] बहवो हि मत्स्या
मान्योऽथ मैत्रावरुणिः स्वयं वा ॥२६॥
आ ला रथ(१८)मिति तस्य प्र प्र वस्त्रिष्टुभमिष(१९)[ख] च।
आङ्गिरसः प्रियमेध ऋषिरित्यवगम्यताम् ॥२७॥
यो राजे(२०)ति च सूक्तस्य त्वं न(२१) इत्युत्तरस्य च।
आङ्गिरसः पुरुहन्मा मुनिरत्र यदुत्तरम् ॥२८॥
तत्र लभ्यतरोऽयं वा सुदीतिपुरुमीळ्हयोः।
हविष्कृणुध्व(२२)मित्यस्मिन् प्रागाथो हर्यतो मुनिः॥२९॥
उदीराथा(२३)मिति तस्य तथा तस्योत्तरस्य च।
आत्रेयोऽयं गोपवन ऋषिरित्यवगम्यताम् ॥३०॥
आत्रेयः सप्तवध्रिर्वा तयोः पूर्वस्य गम्यताम्।
ऋषिर्घुणा हि[ग](२४) सूक्तस्य विरूपो वाङ्गिरसः सुतः॥३१॥
इमं नु(२५) सूक्तमारभ्य त्रिषु सूक्तेष्वतः परम्।

---

(क) बद्धा इति म०।
(ख) भोटम्मूलरसम्पादितऋग्वेदे त्रिष्टुभमिति पाठो वर्त्तते।
(ग) भोटम्मूलरसम्पादितऋग्वेदे घृणा चोति पाठो वर्त्तते।

काण्वः कुरुसुतिर्नाम ऋषिरित्यवगम्यताम् ॥२२॥
अयं क्रतु(७९)रिति तस्मिन् क्रतुर्नाम भृगोः सुतः ।
न ह्यन्य(८०)मिति सूक्तेऽस्मिन्नेकद्यूर्नौधसो मुनिः[क] ॥२३॥
आ तू न[ख](८१) इत्युपक्रम्य त्रिषु सूक्तेभ्यतः परम् ।
कुसीदी नाम काण्वोऽयमृषिरित्यवगम्यताम् ॥२४॥
प्रेष्ठं व(८३) इति[ग] सूक्तस्य काव्योऽयमुशना मुनिः ।
आ ते वत्स(८४)मुपक्रम्य त्रिषु सूक्तेष्वतः परम् ॥२५॥
आङ्गिरसः कृष्णनामा मुनिरित्यवगम्यताम् ।
एषान्तु मध्यमे सूक्ते कार्ष्णिर्वा विश्वको मुनिः ॥२६॥
उत्तरे च [घ]वसिष्ठस्य पुत्रो वा द्युम्निको[ङ] मुनिः ।
प्रियमेधो वाङ्गिरस ऋषिरित्यवगम्यताम् ॥२७॥
त्वमोदंसस्य[च](८८) सूक्तस्य नोधा नाम स गौतमः ।
इन्द्रायेन्द्राय(८९) सूक्तस्य ऋषी तस्योत्तरस्य च ॥२८॥
नृमेधः पुरुमेधश्च द्वावेतावङ्गिरःसुतौ ।
अपाला नाम कन्ये(९१)ति सूक्तस्यात्रेः सुता मुनिः ॥२९॥
श्रुतकक्षः सुकक्षश्च तावप्याङ्गिरसः सुतौ ।

---

(क) नाम नौधसः इति ग० ।
(ख) मोक्षमूलरसम्पादितऋग्वेदे आ तु न इति पाठो दृश्यते ।
(ग) प्रेष्ठं वोऽतिथीति ग० घ० ।
(घ) उत्तरमेवेति ज० ।
(ङ) द्युम्नीक इति सर्व्वानुक्रमणी ।
(च) मोक्षमूलरसम्पादितऋग्वेदे सर्व्वानुक्रमण्यामनुक्रमणिकाविवरणे च त्वमोदस्यमिति पाठो वर्त्तते ।

पान्तमा व(९२) इति श्रुतकक्षो ऽवगम्यताम् ॥४०॥
उद्वेदभी(९३)ति सूक्तस्य सुकक्षः स्वयमेव तु ।
गौर्धयती(९४)ति सूक्तस्य बिन्दुराङ्गिरसः सुतः ।
पूतदक्षोऽथवा ज्ञेयः सोऽपि चाङ्गिरसः सुतः ॥४१॥

　आ त्वे(९५)ति सूक्ते तत उत्तरे च
　तिरश्चिनामा(क)ङ्गिरसस्तनूजः ।
　तथोत्तरे मारुतिर्वा द्युतानो
　रेभस्ततः काश्यप उत्तरस्य ॥४२॥

इन्द्राय साम(९८) सूक्तस्य तथा तस्योत्तरस्य च ।
नृमेधनामाङ्गिरस ऋषिरित्यवगम्यताम् ॥४३॥
अयन्त एमि(१००) सूक्तस्य नेमो नाम भृगोः सुतः ।
अयमस्मि(१००,४) द्वृचे त्वस्मिन्निन्द्र एव ऋषिः स्मृतः ॥४४॥
ऋधगित्थे(१०१)ति सूक्तस्य जमदग्निः स भार्गवः ।
त्वमग्न(१०२) इति सूक्तस्य प्रयोगो नाम भार्गवः ॥४५॥
अथवा बार्हस्पत्यः पावकोऽग्निर्मुनिः स्मृतः ।
गृहपतियविष्ठाख्यावग्नी वा सहसः सुतौ ॥४६॥
तयोरन्यतरो वाप्यर्षिरित्यवगम्यताम् ।
ऋषिस्त्वदर्शि(१०३) सूक्तस्य सोभरिर्नाम काण्वजः ॥४७॥

इत्यष्टमं मण्डलम् ।

---

(क) तिरश्ची नामेति सर्वानुक्रमणी, अनुक्रमणिकाविवरणञ्च ।

## अथ नवमं मण्डलम् ।

स्वादिष्ठये(१)त्युपक्रम्य नवमं मण्डलं प्रति ।
पावमान्यस्तु विज्ञेया ऋचयः सौमिकाश्च ते[क] ॥ १ ॥
मण्डलाद्यस्य सूक्तस्य मधुच्छन्दा ऋषिः स्मृतः ।
पवस्व देववीः(२) सूक्ते मेधातिथिरिति स्मृतः ॥ २ ॥
एष देव(३) इति त्वस्य शुनःशेपो मुनिः स्मृतः ।
सना च सोम(४)[ख] सूक्तस्य हिरण्यस्तूप ऋषिः स्मृतः ॥ ३ ॥
एतेषामुक्तगोत्रत्वाद्गोत्रोक्तिर्न कृता मया ।
समिद्ध(५) इत्युपक्रम्य सूक्तानां विंशतिं प्रति ॥ ४ ॥
असितो वा देवलो वा ऋषिरेतौ तु काश्यपौ ।
ऋषिः पवस्व(२५) सूक्तेऽस्मिन्नागस्त्यः स दृढच्युतः ॥ ५ ॥
दृढच्युतस्य पुत्रोऽयमिध्मवाहस्तदुत्तरे ।
एष कवि(२७)रेष वाजी(२८) सूक्तयोरनयोः क्रमात् ॥ ६ ॥
नृमेधः प्रियमेधश्च मुनिराङ्गिरसाविमौ ।

---

(क) सर्व्वानुक्रमणीवेदार्थदीपिकाख्यसायनकृतानुक्रमणिकाविवरणेषु नवममण्डलस्य सोमदेवताकत्वकीर्त्तनमस्ति । अत्र तु नवममण्डले सौमिकानामृषित्वं दृश्यते । अत्र शौनक एव प्रमाणम् । अथवा सोमो देवता एषामिति व्युत्पत्त्या ऋषयोऽपि सौमिका इति व्यपदिश्यन्ते । आधिक्येन व्यपदेशा भवन्तीति न्यायात् ।

(ख) मोक्षमूलरसम्पादितऋग्वेदे सर्व्वानुक्रमण्याञ्च सन च सोमेति पाठो वर्त्तते ।

प्रास्य(२९) प्र धारा अस्ये(३०)ति सूक्तयोरनयो क्रमात् ॥७॥
नृमेधश्चाथ बिन्दुश्च मुनिरङ्गिरस सुत ।
प्र सोमास (३१) प्र सोमास (३२) सूक्तयोरनयो क्रमात ॥८॥
राहूगणो गोतमोऽथ श्यावाश्वश्चात्रिगोत्रज ।
प्र सोमास(३३) उपक्रम्य द्वयोराप्त्यस्त्रितो मुनि ॥९॥
द्वयोर्द्वयोरुत्तरयोर्द्वयोऽङ्गिरस सुता ।
प्रभूवसू रहूगणो बृहन्मतिरिमे त्रय ॥१०॥
प्र ये गाव(४१) उपक्रम्य त्रिषु सूक्तेष्वत परम् ।
मेध्यातिथि स्मृत काण्व ऋषिरित्यवगम्यताम् ॥११॥
त्रिष्वेवाङ्गिरसोऽयास्य प्र ण(४४) इत्युत्तरेष्वपि ।
कविस्तु भार्गव सूक्तेष्वया सोम(४७) इति त्रिषु ॥१२॥
उचथ्यस्त्रिषु सूक्तेषूत्त(५०) इत्यङ्गिरस सुत ।
उत्ते(५३) सूक्त उपक्रम्य सूक्तानामष्टकं प्रति ॥१३॥
काश्यपोऽयमवत्सार ऋषिरित्यवगम्यताम् ।
अया वीती(६१)ति सूक्ते चामहीयुरङ्गिर सुत ॥१४॥
एते असृग्र(६२)मित्यस्मिन् जमदग्निर्भृगो सुत ।
आ पवस्वे(६३)ति सूक्तेऽस्मिन्निध्रुवि काश्यपो मुनि ॥
वृषा सोमे(६४)ति सूक्तेऽस्मिन् मारीच कश्यपो मुनि ॥१५॥

हिन्वन्ति(६५)सूक्त जमदग्निराप
स्वय भृगुर्वा वरुणस्य पुत्र ।
पवित्रगोत्रान्तु पवस्व(६६)सूक्त
वैखानसा नाम शत विदुस्ते ॥१६॥

त्वं सोम(६७)सूक्ते सप्तचास्तृचेषु
मुख्येषु सप्तर्षयः प्रसिद्धाः।
भरद्वाजः कश्यपो गोतमोऽत्रि-
र्विश्वामित्रो जमदग्निर्वसिष्ठः ॥१७॥

उत्तराणां तु शिष्टानामृचामङ्गिरसः सुतः।
पवित्रो वा वसिष्ठो वा ह्युभौ वा तावृषी सह ॥१८॥

प्र देव(६८)मिति वत्सप्रिः[क] सूक्तं भालन्दनो जगौ।
इषुः(६९) सूक्तं त्वाङ्गिरसो हिरण्यस्तूप उत्तरम् ॥१९॥

त्रिरस्मा(७०) इति सूक्तेऽस्मिंस्तत आ दक्षिणो(७१)त्तरे।
रेणुः पूर्व्वोऽथ ऋषभो वैश्वामित्रौ च तावृषी ॥२०॥

हरिं मृजन्ति(७२) सूक्तस्य स्रक्वे द्रप्सस्य(७३) च क्रमात्।
हरिमन्तः पवित्रश्च मुनिरङ्गिरसः सुतः ॥२१॥

शिशुर्न(७४) सूक्ते कक्षीवान्मुनिर्दीर्घतमःसुतः[ख]।
अभि प्रियाण्यु(७५)पक्रम्य पञ्चसूक्तेष्वतः परम् ॥२२॥

कविर्नाम भृगोः पुत्र ऋषिरित्यवगम्यताम्।
सोमस्य धारे(८०)त्यादीनां सूक्तानां त्रितयं प्रति ॥२३॥

भारद्वाजो वसुर्नाम मुनिरित्यवगम्यताम्।
पवित्र(८३)मिति सूक्तस्य पवित्रोऽङ्गिरसः सुतः ॥२४॥

ऋषिः पवस्व(८४) सूक्तस्य वाच्यो नाम प्रजापतिः।
इन्द्राय सोम(८५) सूक्तस्य वेनो नाम स भार्गवः ॥२५॥

---

(क) वत्सप्रीरिति सर्व्वानुक्रमणी।
(ख) दीर्घतमसः सुत इति प० पु०। कक्षीवानौशिज इत्यनुक्रमणिकाविवरणम्।

पवीत(१०७) इति सूक्तेऽस्मिन् भारद्वाजादयो[क] विदुः ।
एते तु सप्त ऋषयः सगोत्राः परिकीर्तिताः ॥४२॥
पवस्वे(१०८)त्युत्तरं सूक्तं यत्रैते त्वृषयो विदुः ।
तस्य त्वाद्ये तृचे शाक्त्यो गौरिवीतिर्ऋषिः स्मृतः ॥४३॥
तृतीयाया ऋचः शक्तिर्वासिष्ठोऽन्त्ये तृचेऽपि च ।
अथ तृचानां शिष्टानामूरुराङ्गिरसो मुनिः ॥४४॥
भारद्वाज[ख] ऋजिश्वा च तथैवाङ्गिरसो नृपाः ।
ऊर्ध्वसद्मा कृतयशा ऋणञ्चय इति त्रयः ॥४५॥
धिष्ण्याग्नयः[ग] परि प्रे(१०९)ति सूक्तमैश्वरयो विदुः ।
पर्यू षु प्र(११०)ति सूक्तस्य त्रसदस्युपुरुकुत्सजौ ॥४६॥
अरुणस्त्रासदस्यव मुनिरित्यवगम्यताम् ।
अया रुचे(१११)ति सूक्तस्य पारुच्छेपिरनानतः ॥४७॥
नानान(११२)मिति सूक्तस्य शिशुराङ्गिरसो मुनिः ।
शर्यणावति(११३)सूक्तस्य य इन्द्रो(११४)रुत्तरस्य च ॥४८॥
मारीचः कश्यपो नाम ऋषिरित्यवगम्यताम् ।

इति नवमं मण्डलम् ।

---

(क) भरद्वाजकश्यपगोतमात्रिविश्वामित्रजमदग्निवसिष्ठा इति षड्गुरु-
शिष्यविवरणं वेदार्थदीपिका च ।
(ख) भारद्वाजा इति ष० ।
(ग) धिष्ण्याग्नेय इति ष० व० ।

# अथ दशमं मण्डलम्।

अग्ने बृहन्निति(१)त्येतद्दशमं मण्डलं पुनि।
क्षुद्रसूक्ता महासूक्ता विज्ञेया ऋषयस्त्विति ॥१॥
मण्डलादिमुपक्रम्य सप्तसूक्तेभ्यतः परं।
आप्त्यस्त्रितो मुनिस्त्वाङ्क्षिशिराः सूक्तयोर्द्वयोः ॥२॥
प्रकेतुने(८)ति तत्रापि यत्सूक्तद्वयमन्त्तयोः।
अम्बरीपसुतस्तत्र सिन्धुद्वीपोऽथवा मुनिः ॥३॥
ओ चि(१०)त्सूक्तेष्वयुक्षु यछ्या सह मुनिर्यमी।
वैवस्वतो यमो नाम नवम्या सह युक्षु तु ॥४॥
वृषा(११)द्यावा(१२)युजे(१३)त्येषां सूक्तानां त्रितयं प्रति।
आङ्गि[क]र्नाम हविर्धानो मुनिरित्यवगम्यताम् ॥५॥
एतेषामुत्तरे सूक्ते विवस्वान्नदितेः सुतः।
परेयिवांसं(१४)सूक्तस्य यमो वैवस्वतो मुनिः ॥६॥
उदीरतामुपक्रम्य पञ्चसूक्तान्यतः परम्।
यमपुत्रा विदुस्तेषामु(१५)चङ्को दमनस्तु मा(१६) ॥७॥
एको देवश्रवास्त्वष्टा(१७)परः सङ्कुसुकः परम्(१८)।
मथितस्तु नि वर्तध्व(१९) मस्मिन् सूक्ते मुनिः पुनः ॥८॥
भृगुर्वा वारुणिर्विद्याद्भार्गवश्च्यवनोऽथवा।
भद्र(२०)मित्यादिसूक्तानां सप्तानां विमदो मुनिः ॥९॥

(क) आङ्गिरित्यत्र आङ्गिरस इति अनुक्रमणिकाविवरणम्।

प्राजापत्यः स ऐन्द्रो वा वसुक्रदा वसुक्रजः ।
ऋषिर्वसुक्र ऐन्द्रीयस्त्रिषु सूक्तेष्वसत्स्व(२७)ति ॥१०॥
तन्मध्यसूक्ते विश्वो हि(२८) प्रथमाया ऋचो मुनिः ।
इन्द्रस्नुषा वसुक्रस्य पत्न्येवेन्द्रो युजामृचाम् ॥११॥
चतुर्थ्यां सप्त शिष्टानां वसुक्रस्त्वयुजामृचाम् ।
प्र देवत्रे(३०)ति सूक्तानां पञ्चानां कवषो मुनिः ॥१२॥
ऐलूषो मौजवान् वाचः प्रावेपा मे(३४)ति चोत्तरे ।
लुशो मुनिः स धानाकस्त्वबुध्र(३५)मितिसूक्तयोः ॥१३॥
नमो मित्रस्य(३७) सूक्तस्य सूर्य्यजोऽभितपा मुनिः ।
अस्मिन्न(३८)इति सूक्तस्य ऋषिरैन्द्र[क]स्तु मुष्कवान् ॥१४॥
यो वां परिज्मा(३९)सूक्तस्य रथ(४०)मित्युत्तरस्य च ।
कक्षीवतः सुता घोषा ऋषिकेत्यत्र कीर्त्तिता ॥१५॥
समानमु त्यं(४१)[ख] घौषेयः सुहस्त्यो नाम वा ऋषिः ।
अस्तेवे(४२)ति त्रिसूक्तानां कृष्ण आङ्गिरसो मुनिः ॥१६॥
दिवस्परि(४५)प्र होते(४६)ति सूक्तयोरनयोरृषिः ।
भालन्दनस्तु वत्सप्रि[ग]र्जगृभ्मा(४७)त्युत्तरस्य [illegible] ॥१७॥
सप्तगुर्नाम विख्यातो मुनिराङ्गिरसः सुतः ।
अहम्भुव(४८) मुपक्रम्य सूक्तानां त्रितयं प्रति ॥१८॥

---

(क) इन्द्र इति सर्व्वानुक्रमणी, अनुक्रमणिकाविवरणञ्च ।

(ख) समानमु त्ये इति घ० च० अ० ।

(ग) वत्सप्रीरिति सर्व्वानुक्रमणी । वत्सः प्रिय इति अनुक्रमणिकाविवरणम् ।

अनयोरुत्तरे सूक्ते लोको(क)वा स इष्यति ॥२८॥
अदितिर्वा दक्षपुत्री मुनिरित्यवगम्यताम् ।
अपि शाक्त्यो गौरिवीतिर्जनिष्ठा(७३) इति सूक्तयो ॥२९॥
सिन्धुक्षित्प्रैयमेधो(ख)ऽय प्र सु व(७५) सूक्त उत्तरे ।
ऐरावतो जरत्कर्ण आ व ऋञ्जस(७६) उत्तरे ॥३०॥
भृगुपुत्र स्यूमरश्मिरभ्रमुष(७७) इति द्वयो ।
अग्निर्वैश्वानरो वाथ स सौचीकोऽग्निरेव वा ॥३१॥
अग्निराजभरो वायमपश्य(७९)मिति सूक्तयो ।
भौवनो विश्वकर्माथ य इमे(८१)त्यादिसूक्तयो ॥३२॥
अथेन्द्र तापसो मन्युर्यस्ते मन्य(८३)विति द्वयो ।
सत्येनोत्तभिता(८५)सूक्त सूर्या ॥विचीत्यार्षं तत् ॥३३॥
वि ही(८६)ति सूक्तमिन्द्राण्या इन्द्रस्य च वृषाकपे ।
वि हि सोतो (८६,१) (ग)किं सुबाह(८६,८) विन्द्राणी (८६,११)
माह(८६,१२)मित्यृचो ॥३४॥
अयमेमी(८६,१९)ति चारभ्य तथा चतसृणामृचाम् ।
उक्ष्णो ही(८६,१४)त्यनया साक नवानामिन्द्र एव दृक् ॥३५॥
एवं श्वम सुभ्राभिके(८६,७) वृषाकपायि रेवति(८६,१३) ।
पर्शुर्ह(८६ [illegible])ति तिसृणां च ऋषिरैन्द्रो वृषाकपि ॥३६॥
एकादशानां शिष्टानामिन्द्राणी सा पुलोमजा ।

---

(क) लौक्य इति सर्वानुक्रमणी ।
(ख) प्रयमेध इति सर्वानुक्रमणिकाविवरणम् ।
(ग) वि हि सोतो(८६,१)रित्यादिविषयकथनं सर्वानुक्रमण्यनुक्रमणि-काविवरणयोरपि सूक्तं । तदपदोषिका तु यथायथमाश्रि सा ।

पायूरक्षोहणे(८७)[क] सूक्ते भरद्वाजसुतो मुनिः ॥३७॥
हविष्यान्तस्य(८८)[ख] सूक्तस्य मूर्द्धन्वान्नाम दर्शितः[ग] ।
अथान्वङ्गिरसः पुत्रो वामदेव्योऽथवा पुनः ॥३८॥
विश्वामित्रसुतो रेणुः सूक्तस्येन्द्रं स्तवे(८९)त्यृषिः ।
सहस्रशीर्षा(९०) सूक्तस्य ऋषिर्नारायणः स्मृतः ॥३९॥
सञ्जागृवद्भि(९१)रित्यस्मिन् वैतहव्योऽरुणो मुनिः ।
यज्ञस्ये(९२)त्यस्य सूक्तस्य शार्य्यातो नाम मानवः ॥४०॥
महि द्यावे(९३)ति सूक्तस्य पार्थ्य[घ]स्तान्व ऋषिः स्मृतः ।
प्रैते(९४) सूक्तस्य सर्पोऽयं काद्रवेयोऽर्बुदो मुनिः ॥४१॥
उर्व्वशी च हये(९५) सूक्ते मुनिरैलः पुरूरवाः ।
ऐलस्य वाक्यमेताः प्रथमाथ चतुर्दशी ॥४२॥
तृतीया द्वादशी षष्ठी सप्तदश्यष्टेति षट् ।
सचा य(९५,८)दिति तिस्रश्च उर्व्वश्या उत्तरा नव ॥४३॥
प्र ते मह(९६) इति तस्य बरुराङ्गिरसः सुतः ।
ऐन्द्रः सर्व्वहरिर्वायमृषिरित्यवगम्यताम् ॥४४॥
या ओषधी(९७)[ङ]स्तु सूक्तस्य ऋषिराथर्व्वणो भिषक् ।
आर्ष्टिषेणस्तु देवापिर्मुनिः सूक्ते बृहस्पते(९८) ॥४५॥

---

(क) मोक्षमूलरसम्पादितऋग्वेदे सर्व्वानुक्रमण्यामनुक्रमणिकाविवरणे च रक्षोहणमिति पाठो वर्त्तते ।
(ख) मोक्षमूलरसम्पादितऋग्वेदे हविष्यान्तमिति पाठोऽस्ति ।
(ग) दर्शक इति पाठः सम्भवितुमर्हति ।
(घ) पार्थ इति सर्व्वानुक्रमण्यां ।
(ङ) ओषधीरिति म० भ० ।

भरद्वाजसुता रात्रिरथवा गम्यतामृषिः ।
ममाग्न(१२८) इति सूक्तस्य विहव्योऽङ्गिरसः सुतः ॥६४॥
नास(१२९)त्सूक्ते मुनिर्ज्ञेयः परमेष्ठी प्रजापतिः ।
यो यज्ञ (१३०) सूक्ते(क) यज्ञस्तु प्राजापत्य ऋषिः स्मृतः ॥६५॥
काक्षीवतः सुकीर्तिस्तु सूक्तेऽप प्राच(१३१) उत्तरे ।
ईजान(१३२) सूक्ते नार्मेधः शकपूत ऋषिः स्मृतः ॥६६॥
प्रो ष्वस्मा(१३३) इति सूक्तस्य सुदाः पैजवनो मुनिः ।
यौवनाश्वस्तु मान्धाता सूक्तस्योभे य(१३४)दित्यृषिः ॥६७॥
इद्दोसममामयाध्यर्द्धां(१३४,७) गोधा नारी ददर्श च ।
यस्मिन्(१३५) सूक्ते कुमारोऽयमृषिर्यामायनः स्वयम् ॥६८॥
मुनयो वातरशना एकर्चाः सप्त केशिन (१३६)।
जूतिश्च वातजूतिश्च विप्रजूतिर्वृषाणकः ॥६९॥
करिक्रतैतशौ च दाल्भ्यश्टङ्गश्च सप्तमः ।
उत(१३७) सूक्ते सप्तर्षय(ख) एकर्चा एव ते विदुः ॥७०॥
तव त्य(१३८) इति सूक्तस्य अङ्गस्तूपिहरो सुतः ।
विश्वावसुः सूर्य(१३९) सूक्ते मुनिर्गन्धर्व एव च ॥७१॥
अग्ने तवे(१४०)ति सूक्तस्य मुनिरग्निस्तु पावकः ।
अग्ने अच्छे(१४१)ति सूक्तस्य मुनिरग्निस्तु तापसः ॥७२॥
अय(१४२) सूक्ते द्वया शार्ङ्गा जरिता द्रोण उत्तरः ।
सारिसृक्वः स्तम्बमित्रश्च एते पक्षिणो विदुः ॥७३॥

(क) यो यज्ञयाके इति पु० पु० अ० ।
(ख) भरद्वाजादयः सप्त ऋषयः एकर्चोऽयमन्त्राः ।

त्यं चि(१४३)त्सूक्तस्य साङ्ख्योऽत्रिरय(१४४)मित्युत्तरस्य तु ।
तार्क्ष्यपुत्रः सुपर्णो वा मुनिर्यामायनोऽथवा ॥७४॥
स ऊर्ध्वकृशनो ज्ञेय इन्द्राणीमां खनाम्यृ(१४५)षिः ।
ऐरम्मदो देवमुनिररण्यानी(१४६)त्यृषिः स्मृतः ॥७५॥
सुवेदा नाम शैरीषिः(क) श्रत्ते(१४७) सूक्ते मुनिः स्मृतः ।
सुष्वाणास(१४८)स्तु सूक्तस्य वैन्यो नाम पृथुर्मुनिः ॥७६॥
सविता(१४९) सूक्तस्य चार्चन्(ख) हैरण्यस्तूप एव सः ।
मृळीको नाम वासिष्ठः समिद्धश्चि(१५०)दित्यृषिः ॥७७॥
श्रद्धयाग्नि(१५१)रिति त्वस्य श्रद्धा कामायनी मुनिः ।
भरद्वाजसुतः शासः शास इत्थे(१५२)त्यृषिः स्मृतः ॥७८॥
इन्द्रस्य मातरो यास्ता ऋषयो देवजामयः ।
ईङ्खयन्ती(१५३)रिति त्वस्य सोमो(१५४) वैवस्वती यमी ॥७९॥
अरायि(१५५) सूक्तेऽप्यृषिर्भारद्वाजः शिरिम्बिठिः(ग) ।
अग्निं हिन्वन्तु नः(१५६) सूक्ते केतुरग्निसुतो मुनि ॥८०॥
इमा नु(१५७) भुवन आप्त्यः साधनो भौवनोऽथवा ।
सूर्यो न(१५८) इति सूक्तस्य सौर्यश्चक्षुरृषिः स्मृतः ॥८१॥
उदसौ(१५९) त्वस्य पौलोमी शची नाम मुनिः स्मृतः ।
ऋषिस्तीव्रस्य(१६०) सूक्तस्य वैश्वामित्रस्तु पूरणः ॥८२॥
प्राजापत्यस्तु मुञ्चामी(१६१)त्यस्य यक्ष्मनाशनः ।

---

(क) शैलूषिरिति स० प० क० । अनुक्रमणिकादिविरुद्धम् ।
(ख) आर्चन्न इति प० च० क० ।
(ग) शिरिम्बिठ इति सर्वानुक्रमणी ।

रक्षोहायन्त्वग्निर्ब्राह्मो ब्रह्मणाग्नि(१६२)रमुष्य तु ॥८३॥
अचीभ्या(१६३)मिति सूक्तस्य काश्यपो विवृहा मुनिः।
प्रचेतास्तु जगौ सूक्तमपेहो(१६४)त्यङ्गिरः सुत ॥८४॥
देवाः कपोत(१६५) सूक्तस्य कपोतो नैर्ऋतस्त्वृषिः।
ऋषभं मे(१६६)ति सूक्तस्य वैराज ऋषभो मुनिः ॥८५॥
शाक्वरो वा स ऋषभस्त्वग्नेद(१६७)मिति तृचरे।
विश्वामित्रजमदग्नी ऋषिर्गाथिजभार्गवौ ॥८६॥
वातायनो मुनिः सूक्तं वातस्ये(१६८)त्यनिलो जगौ।
मयोभू(१६९) प्रवरं सूक्तं काक्षीवत ऋषिर्जगौ ॥८७॥
विभ्राड्(१७०)सूक्तमिदं सौर्यं नाम्ना विभ्राडृषिर्जगौ।
इटतो(क) भार्गवः सूक्तं त्वन्यमिटतो(१७१) जगौ ॥८८॥
चीण्युत्तराणि सूक्तानि विदुरङ्गिरसस्त्रयः।
आयाह्या(१७२)वा(१७३)भि(१७४)सवर्त्तो ध्रुवोऽभीवर्त इत्यमी॥८९॥
प्र वो ग्रावाण(१७५) इत्यस्मिन्नूर्ध्वग्रावार्बुदिर्मुनिः।
प्र सुन्वत(१७६) इति त्वस्य सूनुर्नामार्भवो मुनिः।९०॥
प्राजापत्यः पतङ्गोऽयं पतङ्ग(१७७) सूक्तमुक्तवान्।
अरिष्टनेमिस्तार्क्ष्योऽयं जगौ सूक्तं त्यमू्षि(१७८)ति ॥९१॥
उत्तिष्ठते(१७९)ति चैकर्चं सूक्तमेतत्त्रयो विदुः।
शिबिरौशीनरः पूर्वं काशिराजः प्रतर्दनः।९२॥
रौहिदश्वो वसुमना इत्येत ऋषयः क्रमात्।

---

(क) इटत इत्यत्र प्रथमायास्तलिक।

गोधा घोषा विश्ववारा पाम्नोपनिषन्निषत् ।
ब्रह्मजाया जुहूर्नाम अगस्त्यस्य स्वसादितिः ॥१००॥
इन्द्राणी चेन्द्रमाता च सरमा रोमशोर्वशी ।
लोपामुद्रा च नद्यश्च यमी नारी च शश्वती ॥१०१॥
श्रीर्लाक्षा सार्पराज्ञी वाक् श्रद्धा मेधा च दक्षिणा ।
रात्री सूर्या च सावित्री ब्रह्मवादिन्य ईरिताः ।
स गौतमो(क) वामदेवो यः खिलान्ता ऋचो जगौ ॥१०२॥

यैर्वेदमन्त्राः सकलाः सुदृष्टा
येनार्षानुक्रमणी प्रदिष्टा ।
नमोऽस्तु तेभ्यो मुनिपुङ्गवेभ्यो
भवन्तु ते चापि मयि प्रसन्नाः ॥१०३॥

इति दशम मण्डलम् ॥

इति शौनकाचार्यकृतार्षानुक्रमणी समाप्ता ॥

---

(क) स गोतम इति ज० ।

# अथ छन्दोऽनुक्रमणी।

## प्रथमं मण्डलम्।



ऋग्वेदगतसूक्तानां सूक्तस्थानामृचामपि।
यानि छन्दांसि विद्यन्ते तानि वक्ष्यामि सम्प्रति ॥१॥
गायत्रं नव सूक्तानि मधुच्छन्दस आदितः।
आनुष्टुभे परे ज्ञेये दशमैकादशे उभे ॥२॥
मेधातिथेस्तु सूक्तेषु गायत्र्येषूत्तरे त्विति।
पुरउष्णिक्(क) परानुष्टुप्(ख)(१) त्रिष्टुबान्त्या(ग) अनुष्टुभः ॥३॥
शुनःशेपस्य सूक्तानि गायत्र्याण्येव तत्र तु।
त्रिष्टुभौ प्रथमस्याद्ये(घ) पञ्चाद्या(ङ)श्च तथा दश ॥४॥
उत्तमा(च) च चतुर्थस्य षोडशी(छ) चोत्तमस्य या।
षष्ठस्तु पाङ्क्त(ज)माद्यास्तु पञ्चमे षड(झ)नुष्टुभः ॥५॥
षगम्याकं त्रिमिषीना(ञ)मेषा पादनिचृन्मता।

---

(१) सर्वानुक्रमण्यामनुक्रमणिकाविवरणे च ह्यस्यास्य एकविंशमन्त्र-स्याया अनुष्टुप्छन्दः प्रतिष्ठेत्युक्तम्।

---

(क) सू० २३, ऋ० १९। (ख) सू० २३, ऋ० २०। (ग) सू० २३, ऋ० २२, २३, २४। (घ) सू० २४, ऋ० १, २। (ङ) सू० २४, ऋ० ६, ७, ८, ९, १०, ११, १२, १३, १४, १५। (च) सू० २७, ऋ० १३। (छ) सू० ३०, ऋ० १६। (ज) सू० २९। (झ) सू० २८, ऋ० १, २, ३, ४, ५, ६। (ञ) सू० ३०, ऋ० ११।

# अथ छन्दोऽनुक्रमणी।

## प्रथमं मण्डलम्।

ऋग्वेदगतसूक्तानां सूक्तस्थानामृचामपि ।
यानि छन्दांसि विद्यन्ते तानि वक्ष्यामि सम्प्रति ॥१॥
गायत्र नव सूक्तानि मधुच्छन्दस आदितः ।
आनुष्टुभे परे ज्ञेये दशमैकादशे उभे ॥२॥
मेधातिथेस्तु सूक्तेषु गायत्रेषूत्तरे स्थिति ।
पुरउष्णिक्[क] परानुष्टुप्[ख][1]तिस्रश्चान्त्या[ग] अनुष्टुभः ॥३॥
शुनःशेपस्य सूक्तानि गायत्राण्येव तत्र तु ।
त्रिष्टुभौ प्रथमस्याद्ये[घ] पञ्चाद्या[ङ]श्च तथा दश ॥४॥
उत्तमा[च] च चतुर्थस्य षोडशी[छ] चोत्तमस्य या ।
षष्ठन्तु पाङ्क्त[ज]माद्यास्तु पञ्चमे षड्[झ]नुष्टुभः ॥५॥
ऋगस्माकं शिप्रिणीना[ञ]मेषा पादनिचृन्मता ।

---

(१) सर्वानुक्रमण्यामनुक्रमणिकाविवरणे च सूक्तस्यास्य एकविंशसङ्ख्याकाया ऋचश्छन्द प्रतिष्ठेत्युक्तम् ।

---

(क) सू० २२, ऋ० १९। (ख) सू० २३, ऋ० २०। (ग) सू० २३, ऋ० २२, २३, २४। (घ) सू० २४, ऋ० १, २। (ङ) सू० २४, ऋ० ६, ७, ८, ९, १०, ११, १२, १३, १४, १५। (च) सू० २७, ऋ० १३। (छ) सू० ३०, ऋ० १६। (ज) सू० २९। (झ) सू० २८, ऋ० १, २, ३, ४, ५, ६। (ञ) सू० ३०, ऋ० ११।

हिरण्यस्तूपसूक्तानि त्रैष्टुभान्यथ तत्र तु ॥६॥
प्रथमस्य चतुर्थस्य जागते(क) प्रथमे तयो ।
अष्टमी षोड़शी चान्त्या(ख) त्रिष्टुभश्चरमे पुन ॥७॥
अन्त्या च नवमी(ग) चापि त्रिष्टुभावेव गम्यताम् ।
उत्तमे तु जगत्याद्या(घ) नवमी(ङ) जगतीनिवृत् ॥८॥
कण्वस्य प्रथम(च) सूक्त चतुर्थं(छ) पञ्चम(ज) च यत् ।
प्रस्कण्वस्य च तान्ये(झ)व प्रगाथा बार्हता द्वचा ॥९॥
प्रस्कण्वस्य द्वितीय(ञ)श्च षष्ठ(ट)श्चानुष्टुभे उभे ।
चतस्योत्तमस्यान्त्या(ठ) कण्वस्यानुष्टुबुत्तमा(ड) ॥१०॥
सर्वा गायत्र्य एवान्या कण्वप्रस्कण्वयोश्चैव ।
सव्यस्य सप्त सूक्तानि(ढ) जागतान्येव तत्र तु ॥११॥
प्रथमस्य तृतीयस्य द्वचोऽन्त्य(ण)स्त्रैष्टुभ स्मृत ।
त्वमाविथा(त)सम यच्च(थ) तुभ्येदेते(द) च श्रेष्ठम्(ध) ॥१२॥
त्वं भुव(न)स्त्रिष्टुभश्चैता चार्चन्ते(प)त्यृचा सह ।

---

(क) सू० ३१, ३४ । (ख) सू० ३१, ऋ० ८, १६, १८ । (ग) सू० ३४, ऋ० ९, १२ । (घ) सू० ३५, ऋ० १ । (ङ) सू० ३५, ऋ० ९ । (च) सू० ३६ । (छ) सू० ३९ । (ज) सू० ४० । (झ) सू० ४४, ४७, ४८ । (ञ) सू० ४५ । (ट) सू० ४९ । (ठ) सू० ५०, ऋ० १०, ११, १२, १३ । (ड) सू० ४३, ऋ० ९ । (ढ) सू० ५१, ५२, ५३, ५४, ५५, ५६, ५७ । (ण) सू० ५१, ऋ० १४, १५ सू० ५३, १०, ११ । (त) सू० ५४, ऋ० ६ । (थ) सू० ५४, ऋ० ८ । (द) सू० ५४, ऋ० ९ । (ध) सू० ५४, ऋ० ११ । (न) सू० ५२, ऋ० १२ । (प) सू० ५२, ऋ० १५ ।

त्रयोदशश्च(क) गायत्रं आगतं तदनन्तरम्(ख) ।
प्रस्तारपङ्क्ती आद्यन्त्ये(ग) त्वा विद्युन्मद्भिरस्य तु ॥२०॥
त्रिष्टुभस्तु द्वितीयाद्या(घ) विराड्रूपा तु पञ्चमी(ङ) ।
षोडशं आगतं(च) तस्य त्र्यान्त्य(छ)स्त्रैष्टुभः स्मृतः ॥२१॥
षष्ठी(ज)त्वेका विराट्स्थाना सा च स्वस्ति न इत्यसौ ।
ऋजुनीती(झ)ति गायत्र्यस्त्वेकानुष्टुबुत्तमा(ञ) ॥२२॥
पराणि(ट)त्रैष्टुभान्येव तथापि प्रथमे पुनः ।
सं चोमासी(ठ)ति गायत्र्यो द्वादशोष्णिगतः परा(ड) ॥२३॥
चतु(ढ)र्जगत्यः प्रथमा उपान्त्यान्त्याः(ण) ककुप्पिदः ।
सप्तमस्य तु सूक्तस्य तिस्रोऽ(त)नुष्टुभ आदितः ॥२४॥
नवमीप्रभृति(थ)स्तस्य गायत्र्योऽस्य परस्तृचः ।
कुत्ससूक्तेषु गायत्रं चतुर्थं(द) त्रैष्टुभेष्वथ ॥२५॥
पाङ्क्तं द्वादशमं(ध) सूक्तमुद्धृत्यान्त्यान्तथाष्टमीम् ।
महापङ्क्त्यष्टमी(न) सा यवमध्या च योद्धृता ॥२६॥

---

(क) सू० ८६। (ख) सू० ८७। (ग) सू० ८८, ऋ० १, ६। (घ) सू० ८८, ऋ० २, ३, ४। (ङ) सू० ८८, ऋ० ५। (च) सू० ८९। (छ) ८९, ऋ० ८, ९, १०। (ज) सू० ८९, ऋ० ६। (झ) सू० ९०। (ञ) सू० ९०, ऋ० ९। (ट) सू० ९१, ९२, ९३। (ठ) सू० ९१, ऋ० ५, ६, ७, ८, ९, १०, ११, १२, १३, १४, १५, १६। (ड) सू० ९१, ऋ० १७। (ढ) सू० ९१, ऋ० १, २, ३, ४। (ण) सू० ९१, ऋ० १८, १९, २०, २१, २२, २३। (त) सू० ९४, ऋ० १, २, ३। (थ) सू० ९४, ऋ० ९, १०, ११। (द) सू० ९७। (ध, सू० १०५। (न) सू० १०५, ऋ० ८।

प्रथम(क)श्चैकविंश(ख)श्च नवम(ग)श्चाष्टमं(घ) ततः ।
ऊर्ध्वं(ङ)श्च षोडश त्रीणि(च) सप्तमंश्च त्रयोदशम्(छ) ॥२७॥
एतानि काण्वतान्येषु प्रथमेऽन्त्यं तृचं(ज) विना ।
एकोनविंशे(झ) चैकविंशे(ञ) तथैवान्त्यं तृचं विना ॥२८॥
तृचं त्रयोदशे(ट) त्वन्त्यां नवमे(ठ)ऽष्टादशे(ड) विना ।
ततं मे पञ्चमीं चान्त्या(ढ)मष्टमेऽन्त्यौ तृचौ(ण) विना ॥२९॥
कक्षीवतस्तु सूक्तेषु चतुर्थं(त) तस्य आगतम् ।
उपोत्तमस्य चर्चौ द्वे चतुर्थी पञ्चमी(थ) च या ॥३०॥
पञ्चमस्य तु गायत्र्यस्तिस्रोऽन्त्याः प्रथमा(द) च या ।
अनुष्टुभौ विराजौ वा नवमी चाष्टमी(ध) च या ॥३१॥
अनुष्टुभ चतुर्थी(न) च सप्तमी(प) बृहती विराट् ।
तृतीया पञ्चमी षष्ठी द्वितीया(फ) चोष्णिगक्षरैः ॥३२॥
गायत्री वा द्वितीया(ब)श्च तृतीया(भ) त्रिष्टुभेव वा ।

---

(क) सू० [illegible] । (ख) सू० ११७ । (ग) सू० १०२ । (घ) सू० १०१ । (ङ) सू० ११४ । (च) सू० ११०, १११, ११८ । (छ) सू० १०६ । (ज) सू० ८७, ऋ० १५, १६ । (झ) सू० ११९, ऋ० १८, २० । (ञ) सू० ११५, ऋ० १०, ११ । (ट) सू० १०६, ऋ० ७ । (ठ) सू० १०२, ऋ० ११ । (ड) सू० ११९, ऋ० ५ । (ढ) सू० ११०, ऋ० ५, ८ । (ण) सू० १०१, ऋ० ८, ९, १०, ११ । (त) सू० ११८ । (थ) सू० १२५, ऋ० ४, ५ । (द) १२०, ऋ० १, १०, ११, १२ । (ध) सू० १२ , ऋ० ८, ९ । (न) १२०, ऋ० ३ । (प) सू० १२०, ऋ० ७ । (फ) सू० १२०, ऋ० २, ३, ५, ६ । (ब) सू० १२०, ऋ० २ । (भ) सू० १२०, ऋ० ३ ।

सप्तमस्य विराड्रूपे श्रुत मे[क] आव[ख] इत्यृचौ ॥२३॥
उत्तमस्य तु सूक्तस्य द्वे वाष्यन्ते[ग] अनुष्टुभौ।
अवशिष्टानि सूक्तानि[घ] त्रैष्टुभान्यवगम्यताम् ॥२४॥
आत्यष्ट्यन्य सूक्तानि परुच्छेपस्य तत्र तु।
आद्यस्यातिधृति षष्ठी[ङ] सप्तमे[च]त्यतिशाक्वरम् ॥२५॥
सह सप्ता च[छ] इत्यन्या तृतीया[ज]त्यष्टिरुत्तमा[झ]।
अष्टमस्यान्त्या[ञ] शाक्व नवमस्याप्युपोत्तमे[ट] ॥२६॥
चतुर्थस्योत्तमा[ठ] त्रिष्टुप्दशमस्यो[ड]त्तमस्य[ढ] च।
सप्तमस्यादितस्त्रिष्टुबेकस्या[ण]नुष्टुभस्तृच[त] ॥२७॥
गायत्री[थ] च धृति[द]श्चैव बृहत्यन्यस्य पञ्चमी[ध]।
द्वे सूक्ते दीर्घतमस प्रथमे[न] जागते तयोः ॥२८॥
पूर्वस्य दशमी[प] त्रिष्टुबथ चानुष्टुभ परम्[फ]।
षष्ठस्य जागतं सूक्तं चतुर्थं पञ्चम[ब] [illegible] यत् ॥२९॥

---

(क) सू० ११२, ऋ० ६। (ख) सू० १२२ ऋ० ५। (ग) सू० १२६, ऋ० ६, ७। (घ) सू० १६, १७, १८, २१, २३, २४, २५। (ङ) सू० १२७, ऋ० ६। (च) सू० ११७। (छ) सू० १२८, ऋ० ८, ९। (ज) सू० १०८, ऋ० ३। (झ) सू० १२८, ऋ० ११। (ञ) सू० १३४, ऋ० ६। (ट) सू० १३५, ऋ० ७ ८। (ठ) सू० १४०, ऋ० १०। (ड) सू० १३६, ऋ० ७। (ढ) सू० १३८, ऋ० ११। (ण) सू० १३१, ऋ० १। (त) सू० १३३ ऋ० २, ३ ४। (थ) सू० १३२ ऋ० ५। (द) सू० १३२, ऋ० ६। (ध) सू० १३८, ऋ० ५। (न) सू० १४०, १४१। (प) सू० १४०, ऋ० १०। (फ) सू० १४२। (ब) सू० १४३, १४४, १४५।

वैराजं दशमं[क]तस्मात्परे त्वौष्णिह[ख]जागते[ग] ।
जागतानि तु सूक्तानि षोडशप्रभृतीनि षट्[घ] ॥४०॥
अनुष्टुबन्तादन्यानि वसू रुद्रेतित्रैष्टुभात्[ङ] ।
त्रयोविंशस्य सूक्तस्य सह षष्ठ्या तृतीयया[च] ॥४१॥
अस्य वामीय सूक्तस्य जगत्यः षड्मिमा ऋचः ।
पञ्चपादं[छ] साकं जानां[ज] यद्वायचे[झ]ऽयं स[ञ] च ॥४२॥
महाधर्गर्भा[ट] गौरी[ठ]च तस्यामनुष्टुबुपोत्तमा[ड] ।
प्रस्तारपङ्क्तिस्तु विराड्द्वाचत्वारिंशग[ढ]स्य या ॥४३॥
अतोऽन्यत्त्रैष्टुभं सर्वं शिष्टमत्रावगम्यताम् ।
अत्र द्विविष्टुबन्तानि प्रथमे द्वे[ण] अबोधि[त] च ॥४४॥
त्रिष्टुबन्तानि चैतानि जागतेषु प्रतव्यसीम्[थ] ।
तं इच्छन्त[द] किमु श्रेष्ठ[ध] इति चैष्ववगम्यताम् ॥४५॥
अगस्त्यस्य च सूक्तेषु गायत्रं सूक्तमष्टमम्[न] ।
द्वितीयं जागतं सूक्तं इम[प]मुद्धृत्य तूत्तमम् ॥४६॥
अष्टादशं[फ] चतुर्थं[ब]च द्वे एते जागते तयोः ।

---

(क) सू० १४९ । (ख) सू० १५० । (ग) सू० १५१ । (घ) सू० १५५, १५६, १५७, १५९, १६०, १६१ । (ङ) सू० १५८ । (च) सू० १६२, ऋ० ५, ६ । (छ) सू० १६४, ऋ० १२ । (ज) सू० १६४, ऋ० १५ । (झ) सू० १६४, ऋ० २३ । (ञ) सू० १६४, ऋ० २९ । (ट) सू० १६४, ऋ० ३६ । (ठ) १६४, ऋ० ४१ । (ड) सू० १६४, ऋ० ५१ । (ढ) सू० १६४, ऋ० ४२ । (ण) सू० १४०, ऋ० १२, १३ । सू० १४१, ऋ० १२, १३ । (त) सू० १४७, ऋ० ५, ६ । (थ) सू० १४३, ऋ० १ । (द) १४५, ऋ० १ । (ध) सू० १६१, ऋ० १ । (न) सू० १७२ । (प) सू० १६६, ऋ० १४, १५ । (फ) सू० १८८ । (ब) सू० १६८ ।

आद्यादुद्धृत्य पञ्चान्त्ये(क) चतुर्थाद्योत्तम तृचम्(ख) ॥४७॥
षष्ठ(ग)मेकादश(घ)ञ्चास्य सूक्ते आनुष्टुभे परे ।
उभयोरुत्तमा(ङ) त्रिष्टुबाद्या(च) तु बृहती तयो ॥४८॥
एकादशो(छ)ऽस्य बृहती स्कन्धोग्रीवीति गम्यताम् ।
पञ्चमस्य तु सूक्तस्य द्वितीया(ज)ऽनुष्टुब्विराट् स्मृता ॥४९॥
द्वादशस्योत्तमा(झ)त्रिष्टुप् शिष्टा सर्वा अनुष्टुभ ।
एका पञ्चदशे सूक्ते पञ्चमी(ञ) बृहतीमिष्टत् ॥५०॥
त्रयोविंश(ट)स्तु गायत्र सप्तोष्णिक् प्रथमा(ठ) तु ककुप् ।
अनुष्टुब्गर्भरूपोष्णिगथवैषा(ड)वगम्यताम् ॥५१॥
तृतीया पञ्चमी षष्ठी सप्तमी(ढ)ता अनुष्टुभ ।
अनुष्टुब्बृहती चान्त्या(ण) गायत्र सूक्तमुत्तरम(त) ॥५२॥
त्रिशेथ उत्तमे सूक्ते दशमीप्रभृतित्रय(थ) ।
आनुष्टुभ महापङ्क्ती मध्या च बृहती परा(द) ।
अवशिष्टानि सूक्तानि (ध)त्रैष्टुभान्यवगम्यताम् ॥१ ५३॥

इति प्रथम मण्डलम् ।

---

(क) सू० १८२, ऋ० ६, ८। (ख) सू० १६८, ऋ० ८, ९, १०। (ग) सू० १७०। (घ) १७१। (ङ) सू० १७०, ऋ० ५, सू० १७५, ऋ० ६। (च) सू० १७०, ऋ० १।१७५, १। (छ) सू० १७५, ऋ० १। (ज) सू० १६९, ऋ० २। (झ) १७६ ऋ० ६। (ञ) सू० १७९, ऋ० ५। (ट) सू० १८७। (ठ) सू० १८७, ऋ० १। (ड) सू० १८७, ऋ० २। (ढ) सू० १८७, ऋ० ३ ५, ६, ७। (ण) सू० १८७, ऋ० ११। (त) सू० १८८। (थ) सू० १९१, ऋ० १०, ११, १२। (द) सू० १९१, ऋ० १६। (ध) सू० ६६, ६७, ६९, ७१, ७२, ७३, ७४, ७७, ७८, ७९, ८०, ८१, ८३, ८४, ८५, ८६, ८९, ९०।

## अथ द्वितीयं मण्डलम्।



सूक्त गृत्समदस्याथ प्रथमे[क] आगते उभे।
साध्वपावी[ख]ति चर्चां द्वे तृतीये त्रैष्टुभे सति ॥१॥
त्रैष्टुभात्तुष्टुभे स्वग्रं चतुर्थं पञ्चमं[ग] च यत्।
गायत्र[घ]माष्टमात्सर्वं तत्रैकानुष्टुबुत्तमा[ङ] ॥२॥
ऊर्ध्वं चत्वारि[च] षड्विंशादूर्ध्वञ्च द्वे[छ] चयोदशात्।
चौपि[ज] सप्तदशादूर्ध्वमूर्ध्वं चत्वारि[झ] चाष्टमात् ॥३॥
सर्वाण्येतानि सूक्तानि त्रैष्टुभानि चयोदश।
उत्तमस्योत्तमा[ञ]मेषामुद्धृत्य जगतीमृचम् ॥४॥
विश्वं मत्य[ट]मिति चिष्टुब्बृहस्पते अती[ठ]ति च।
अतोऽन्यच्चागतं सूक्तं भागाते पित[ड]रित्यतः ॥५॥

---

(क) सू० १, २। (ख) सू० ३, ऋ० ६, ७। (ग) सू० ४, ५। (घ) सू० ६, ७, ८। (ङ) सू० ८, ऋ० ६। (च) सू० २६, २७, २८, २९। (छ) सू० १४, १५। (ज) सू० १८, १९, २०। (झ) सू० ९, १०, ११, १२। (ञ) सू० ४२, ऋ० ३। (ट) सू० २४, ऋ० १२। (ठ) सू० २३, ऋ० १५। (ड) सू० ३३।

अद्या(क)दि सूक्तमुद्धृत्य द्वाविंश(ख)मतिशाक्वरम् ।
अष्टिपञ्चपदावन्त्ये(ग) तृतीय.(घ) षोडशाक्षरः ॥६॥
सिनीवालि(ङ) यासुबाहु(च) र्यागुङ्गूरि(छ)त्यनुष्टुभः ।
त्रैष्टुभस्य तु शेषस्य चतुर्थ(ज) पञ्चम(झ) च यत् ॥७॥
जागतानि द्वितीयस्य(ञ) द्वितीयाद्यन्तं उत्तमम्(ट)(१) ।
गायत्रं नवमं(ठ) तस्य सारस्वत्या(ड)वनुष्टुभौ ॥८॥
इमा ब्रह्मे(ढ)ति बृहती षोडशी(ण) सातिशक्वरी ।
तदस्मै द्वित्रिष्टुबन्त(त) सूक्तं सप्तदशन्तु यत् ॥९॥
त्रयोदशं चतुस्त्रिंशमेकविंशं च षोडशम् ।
एकविंशं त्रयोविंशं चतुर्विंशस्य सप्त तु ॥१०॥
एतानि(थ) त्रिष्टुबन्तानि गम्यतां जागतेष्वपि ॥१४०॥

इति द्वितीयं मण्डलम् ।

---

(१) पञ्चमोत्तर उत्तमे(द) इति पाठ सम्भवितुमर्हति ।

(क) सू० २२, ऋ० १ । (ख) सू० २२ । (ग) सू० २२, ऋ० ४ । (घ) सू० २२, ऋ० ३ । (ङ) सू० ३२, ऋ० ६ । (च) सू० ३२, ऋ० ७ । (छ) सू० ३२, ऋ० ८ । (ज) सू० २३, ३६ । (झ) सू० २४, ३७ । (ञ) सू० २१, ३४ । (ट) सू० २६ । (ठ) सू० ४१ । (ड) सू० ४१, ऋ० १६, १७ । (ढ) सू० ४१, ऋ० १८ । (ण) सू० ४३, ऋ० २ । (त) सू० १७, ऋ० ८, ९ । (थ) सू० १३, ऋ० १३, सू० ३४, ऋ० १५, सू० ३६, ऋ० ७, सू० १६, ऋ० ९, सू० २१, ऋ० ५; सू० २३, ऋ० १९, सू० २४, ऋ० १६ । (द) सू० २५, २६ ।

## अथ तृतीयं मण्डलम् ।



द्वितीय[क]श्च तृतीय[ख]श्च विश्वामित्रस्य जागते ।
नवमं[ग] बार्हतं सूक्तं त्रिष्टुबस्योत्तमा[घ]भिधत् ॥१॥
औष्णिहं[ङ] द्वे च गायत्रे[च] बार्हतादुत्तराणि तु ।
षोडशे षड्ऋचे सूक्ते[छ] प्रगाथा बार्हता तृचाः ॥२॥
तुभ्यं स्तोका[ज]घृतवन्तः[झ] सप्तर्षन्तु त्रयोदशम्[ञ] ।
ये वृक्णास.[ट] पुरीष्यास.[ठ] उच्छ्रयस्वे[ड]त्यनुष्टुभः ॥३॥
त्रिष्टुबेव विराड्रूपा तुभ्यं श्चोतंत्यृ[ढ]गत्र या ।
सतोबृहत्यौ तत्र द्वे औजिष्ठन्ते[ण] दश क्षिपः[त] ॥४॥
अतोऽन्यत्त्रैष्टुभं सर्वमानिर्मथित[थ] इत्यतः ।
अनुष्टुभाद्विगायत्रं[द] वैराजं चोत्तरे[ध] ततः ॥५॥
उत्तर[न] जागतं तस्य त्रिष्टुभस्तिस्र उत्तमाः[प] ।
गायत्रे उत्तरे सूक्ते[फ] तयोः षड्ऋच उत्तरे ॥६॥

---

(क) सू० २ । (ख) सू० ३ । (ग) सू० ६ । (घ) सू० ६, ऋ० ६ । (ङ) सू० १० । (च) सू० ११, १२ । (छ) सू० १६ । (ज) सू० २१, ऋ० १ । (झ) सू० २१, ऋ० ॰ । (ञ) सू० १३ । (ट) सू० ८, ऋ० ७ । (ठ) सू० २२, ऋ० ४ । (ड) सू० ८, ऋ० ० । (ढ) सू० २१, ऋ० ४ । (ण) सू० २१, ऋ० ५ । (त) सू० २१, ऋ० ३ । (थ) सू० २३ । (द) सू० २४ । (ध) सू० २५ । (न) सू० २६ । (प) सू० २६, ऋ० ७, ८, ६ । (फ) सू० २७, २८ ।

उष्णिक्त्रिष्टुब्जगत्येव(१) तृतीयाप्रभृतिर्ऋचः[क] ।
अतीद्[ख]स्त्रैष्टुभं तस्य जगत्यौ द्वे उपोत्तमे[ग] ॥७॥
एकादशी[घ] च षष्ठी[ङ] च तावन्योऽन्या अनुष्टुभः ।
प्रथमा च चतुर्थी च दशमी द्वादशी[च] च या ॥८॥
एता अनुष्टुभः सर्वा नदीस्तोत्रस्य चोत्तमा[छ] ।
अतोऽन्यत्त्रैष्टुभं सर्वं यदिन्द्रं मति[ज]रित्यतः ॥९॥
अनुष्टुभ[झ]न्तमुद्धृत्य गायत्रं सूक्त[ञ]मष्टमम् ।
गायत्राणि तु वै त्रीणि[ट] त्रैष्टुभ[ठ]न्द्वे [ड]च पार्वते ॥१०॥
षड्[ढ]त्तराणि सूक्तानि त्रैष्टुभान्युत्तरस्य तु ।
जगत्यः प्रथमास्तिस्र[ण]स्तिस्रो गायत्र्य उत्तमाः[त] ॥११॥
गायत्र्युत्तमं[थ] तस्य षड्वे[द]का जगतीनिचृत् ।
पञ्चमी[ध] चोत्तमे[न] च द्वे त्रिष्टुभस्त्रैष्टुभे परे[प] ॥१२॥
दशमी[फ] [illegible] जगत्यस्य गायत्री च त्रयोदशी[ब] ।

---

(क) सू० २८, ऋ० ३, ४, ५ । (ख) सू० २९ । (ग) सू० २९, ऋ० १४, १५ । (घ) सू० २९, ऋ० ११ । (ङ) सू० २९, ऋ० ६ । (च) सू० २९, ऋ० १, ४, १०, १२ । (छ) सू० ३३, ऋ० १३ । (ज) सू० ३९ । (झ) सू० ३७, ऋ० ११ । (ञ) सू० ३७ । (ट) सू० ४०, ४१, ४२ । (ठ) सू० ४३ । (ड) सू० ४४, ४५ । (ढ) सू० ४६, ४७, ४८, ४९, ५०, ५१ । (ण) सू० ५१, ऋ० १, २, ३ । (त) सू० ५१, ऋ० १०, ११, १२ । (थ) सू० ५२ । (द) सू० ५२, ऋ० ६ । (ध) सू० ५२, ऋ० ५ । (न) सू० ५२ ऋ० ७, ८ । (प) सू० ५३ । (फ) सू० ५३, ऋ० १० । (ब) सू० ५३, ऋ० १३ ।

---

(१) एवेति पाठो भवितुमर्हति ।

अनुष्टुभस्तु विंशी च द्वाविंशी द्वादशी(क) च या ॥१३॥
अष्टादशी(ख) बृहत्यश्च जगत्येव तु षोडशी(ग)।
इमं महे उपक्रम्य त्रैष्टुभान्युत्तराणि षट्(घ) ॥१४॥
तेषां षष्ठे चतस्रस्तु मैत्रे गायत्र्य उत्तमाः(ङ)।
जागत(च)त्रैष्टुभे(छ) सूक्ते सप्तर्चे द्वे उपोत्तमे।
गायत्रमुत्तमं(ज) तस्य त्रिष्टुभस्तिस्र(झ) आदितः ॥१५॥

इति तृतीयं मण्डलम्।

---

(क) सू० ५३, ऋ० १९, २०, २१। (ख) सू० ५३, ऋ० १८। (ग) सू० ५३, ऋ० १६। (घ) सू० ५४, ५५, ५६, ५७, ५८, ५९। (ङ) सू० ५९, ऋ० ६, ७, ८, ९। (च) सू० ६०। (छ) सू० ६१। (ज) सू० ६२। (झ) सू० ६२, ऋ० १, २, ३।

चतुर्थस्योत्तमा(क)मेकामृचमुद्धृत्य चोभयोः ।
प्रथमा(ख) मृचमुद्धृत्य अष्टमस्यापि जागतम् ॥७॥
अनुष्टुप्सप्तमस्यान्त्या(ग) चतस्रोऽन्त्या(घ)श्च पञ्चमे ।
पञ्चमस्यानुवाकस्य मध्ये गायत्रयोर्द्वयोः(ङ) ॥८॥
द्वितीयस्य(च) तृतीयस्य(छ) सूक्ते आनुष्टुभे उभे ।
गायत्रं सप्तमं(ज) सूक्तं जागते नवमाष्टमे(झ) ॥९॥
नवमस्य तु ये ते त्रिरित्यन्त्या(ञ) मृचं विना ।
जगत्येवोत्तमस्यान्त्या(ट)दशमी(ठ) पञ्चमस्य तु ॥१०॥
एकादशस्य गायत्रमृचोऽन्त्यो(ड)दशमस्य च ।
द्वादशे तु द्वितीया च तृतीया चोत्तमा(ढ) च या ।
आनुष्टुभे त्रिष्टुभस्ताः पुरउष्णिक् च पञ्चमी(ण) ॥११॥

इति चतुर्थं मण्डलम् ।

---

(क) सू० २६, ऋ० ९; सू० ४५, ऋ० ७। (ख) सू० ४०, ऋ० १। (ग) सू० ३९, ऋ० ६। (घ) सू० ३७, ऋ० ५, ६, ७, ८। (ङ) सू० ४६, ४९। (च) सू० ४७। (छ) सू० ४८। (ज) सू० ५२। (झ) सू० ५३, ५४। (ञ) सू० ५४, ऋ० ६। (ट) सू० ५८, ऋ० ११। (ठ) सू० ५०, ऋ० १०। (ड) सू० ५५, ऋ० ८, ९, १०; सू० ५६, ऋ० ५, ६, ७। (ढ) सू० ५७, ऋ० २, ३, ८। (ण) सू० ५०, ऋ० ५।

# अथ चतुर्थं मण्डलम् ।

प्रथमा(क) चेष्टुभेष्वष्टिर्वामदेवस्य षट्पदा ।
द्वितीया(ख) त्रिजगत्यस्य तृतीया(ग)स्यां निचृद्धृतिः ॥१॥
सप्तमस्य तु सूक्तस्य प्रथमा(घ) जगतीनिवृत् ।
अनुष्टुभः पराः पञ्च प्राक्(ङ) सप्तस्य पङ्क्ति(च)स्ततः ॥२॥
गायत्रे दशमे सूक्ते भुरिजः पदपङ्क्तय(छ) ।
उष्णिहो वा विराजस्ता.(ज) पञ्चम्या(झ)सामनुष्टुपा ॥३॥
च दशमे च महापूर्वा पदपङ्क्तिर्निगद्यते ।
अग्निर्होते(ञ)ति गायत्रं नवमं चाष्टमं(ट) च यत् ॥४॥
अयं चक्र(ठ)मथ श्वेत(ड) प्रकर्ष्यांवस्य ते उभे ।
गायत्र्यपि तु वै चौथि(ढ) न किरिम्हेति तत्र तु ॥५॥
धामं वामन्ते(ण) क इम(त)मेतद्दे(थ)दित्यनुष्टुभः ।
चतुर्थस्यानुवाकस्य जागतं सूक्तमुत्तमम्(द) ॥६॥

---

(क) सू० १, ऋ० १। (ख) सू० १, ऋ० २। (ग) सू० १, ऋ० ४। (घ) सू० ७, ऋ० १। (ङ) सू० ७, ऋ० २, ३, ४, ५, ६। (च) सू० ७, ऋ० ७। (छ) सू० १०, ऋ० १, २, ३। (ज) सू० १० ऋ० ४, ६, ७, ८। (झ) सू० १०, ऋ० ५। (ञ) सू० १५। (ट) सू० ८, ९। (ठ) सू० १७, ऋ० १४। (ड) सू० २७, ऋ० ५। (ढ) सू० ३०, ३१, ३२। (ण) सू० ३०, ऋ० २४। (त) सू० २४, ऋ० १०। (थ) सू० ३० ऋ० ८। (द) सू० ४५।

## अथ पञ्चमं मण्डलम् ।



आनुष्टुभानां सूक्तानां पङ्क्तिरन्या(क)त्रिमण्डले ।
उरोष्ठ(ख) इन्द्र(ग)कूष्ठो(घ)ऽच्छ(ङ)बलित्था दे(च)यदद्य(छ) च ॥१॥
विद्रा(ज)आचिकिताने(झ)ति सूक्तान्येतान्यपास्य तु ।
अत्रौणा पञ्चम(ञ) सूक्त गायत्र पाङ्क्तमुत्तर(ट) ॥२॥
आनुष्टुभं सप्तम(ठ)न्तु जागत सूक्तमष्टम(ड) ।
नवम दशम(ढ)ञ्चैषा सूक्ते आनुष्टुभे तयोः ॥३॥
पूर्वस्य पञ्चमी(ण)पङ्क्तिश्चतुर्थी(त) चरमस्य च ।
अतोऽन्यत्रैष्टुभं सर्वमाग्नेयक(थ)इत्यत. ॥४॥
उद्धृत्योपोत्तमे सूक्ते गायत्र्येऽर्चना इत्युभे(द) ।
अकरोच्च चतुर्विंशीं जनस्ये(ध)ति च जागतं ॥५॥
अष्टौ पराणि सूक्तानि(न) ज्ञेयान्यानुष्टुभान्यतः ।
चतुर्थ्यन्या(प)विराड्रूपा आद्ये(फ)गायत्र्यो त्विह ॥६॥

---

(क) सू० ७, १६, १७, १८, २०, २१, २२, २३, ३६ । (ख) सू० ३८ । (ग) सू० ३१ । (घ) सू० ७४ । (ङ) सू० २५ । (च) सू० ६७, ८७ । (छ) सू० ८२ । (ज) सू० ७५ । (झ) सू० ६६ । (ञ) सू० ५ । (ट) सू० ६ । (ठ) सू० ७ । (ड) सू० ८ । (ढ) सू० ९, १० । (ण) सू० ९, ऋ० ५ । (त) सू० १०, ऋ० ४ । (थ) सू० १५ । (द) सू० १३, १४ । (ध) सू० ११ । (न) सू० १६, १७, १८, १९, २०, २१, २२, २३ । (प) सू० १९, ऋ० ५ । (फ) सू० १९, ऋ० १, २ ।

द्वैपदा(क)नुष्टुभे(ख) च द्वे गायत्रं तत उत्तरं(ग) ।
त्रैष्टुभा(घ)नुष्टुभौ(ङ)सूक्ते परे पूर्वापरौ तृचौ ॥७॥
अनुष्टुब्(च)द्वे च गायत्र्यौ(छ) उत्तरस्योत्तरस्तृचः ।
त्रिष्टुबेका(ज)जगत्येका(झ)त्रिष्टुबेका(ञ)द्वितस्तृचः॥८॥
त्रैष्टुभान्येव(ट) पञ्चोर्ध्वं परस्तेभ्यस्तु जागतं(ठ) ।
एतत्तु त्रिष्टुबन्त(ड)ञ्च यत्त(ढ)आनुष्टुभं परं ॥९॥
स आगमत्त्रैष्टुभे द्वे(ण) द्वे(त) एवानुष्टुभे उरोः ।
स आगमदिति तस्य तृतीया(थ) जगती स्मृता ॥१०॥
उत्तराणि तु सूक्तानि(द) चत्वारि त्रैष्टुभान्यतः ।
तेषामेकातिजगती द्वितीयस्यास्ति षोडशी(ध) ॥११॥
प्रथमस्य नवर्चस्य प्रथमा(न)स्तिस्र उष्णिहः ।
अभि न इले(प)ति त्रिष्टु(फ)प्प्रैष स्तोमो(ब)हृदयः(भ) ॥१२॥
एता एतेषु प्रकर्ण्या यं वै(म)यज्ञे(य)त्यनुष्टुभे ।

---

(क) सू० २४ । (ख) सू० २५ । (ग) सू० २६ । (घ) सू० २७, ऋ० १, २, ३ । (ङ) सू० २७ ऋ० ४, ५, ६ । (च) सू० २८, ऋ० ४ । (छ) सू० २८, ऋ० ५, ६ । (ज) सू० २८, ऋ० १ । (झ) सू० २८, ऋ० २ । (ञ) सू० २८, ऋ० ३ । (ट) सू० २९, ३०, ३१, ३२, ३३ । (ठ) सू० ३४ । (ड) सू० ३४, ऋ० ९ । (ढ) सू० ३५ । (ण) सू० ३६, ३७ । (त) सू० ३८, ३९ । (थ) सू० ३६, ऋ० ३ । (द) सू० ४०, ४१, ४२, ४३ । (ध) सू० ४१, ऋ० १६ । (न) सू० ४०, ऋ० १, २, ३ । (प) सू० ४१, ऋ० १९ । (फ) सू० ४१, ऋ० १० । (ब) सू० ४२, ऋ० १६ । (भ) सू० ४३, ऋ० १५ । (म) सू० ४०, ऋ० ९ । (य) सू० ४०, ऋ० ५ ।

द्वैपदा(क)नुष्टुभे(ख) च द्वे गायत्रं तत उत्तरं(ग) ।
त्रैष्टुभा(घ)नुष्टुभौ(ङ)सूक्ते परे पूर्वापरौ दृचौ ॥७॥
अनुष्टुब्(च)द्वे च गायत्र्यौ(छ) उत्तरस्योत्तरस्तृचः ।
त्रिष्टुबेका(ज)जगत्येका(झ)त्रिष्टुबेका(ञ)द्वितस्तृचः ॥८॥
त्रैष्टुभान्येव(ट) पञ्चोर्ध्वं परस्तेभ्यस्तु जागतं(ठ) ।
एतत्तु त्रिष्टुबन्त(ड)ञ्च यत्त(ढ)च्चानुष्टुभं परं ॥९॥
च आगमत्त्रैष्टुभे द्वे(ण) द्वे(त) एवानुष्टुभे परे ।
स आगमदिति त्वस्य तृतीया(थ) जगती स्मृता ॥१०॥
उत्तराणि तु सूक्तानि(द) चत्वारि त्रैष्टुभान्यतः ।
तेषामेकातिजगती द्वितीयस्यास्ति योसगौ(ध) ॥११॥
प्रथमस्य नवर्चस्य प्रथमा(न)स्तिस्र उष्णिहः ।
अभि न इळे(प)तिविषु(फ)प्रेष स्तोमो(ब)ऽभ्यद्दयः(भ) ॥१२॥
एता एतेषु माध्यन्यां यं वै(म)यत्ते(य)त्यनुष्टुभे ।

---

(क) सू० २४। (ख) सू० २५। (ग) सू० २६। (घ) सू० २७, ऋ० १, २, ३। (ङ) सू० २७ ऋ० ४, ५, ६। (च) सू० २८, ऋ० ३। (छ) सू० २८, ऋ० ५, ६। (ज) सू० २८, ऋ० १। (झ) सू० २८, ऋ० २। (ञ) सू० २८, ऋ० ३। (ट) सू० २९, ३०, ३१, ३२, ३३। (ठ) सू० ३४। (ड) सू० ३४, ऋ० ९। (ढ) सू० ३५। (ण) सू० ३६, ३७। (त) सू० ३८, ३९। (थ) सू० ३६, ऋ० ३। (द) सू० ४०, ४१, ४२, ४३। (ध) सू० ४१, ऋ० १६। (न) सू० ४०, ऋ० १, २, ३। (प) सू० ४१, ऋ० १८। (फ) सू० ४१, ऋ० १०। (ब) सू० ४२, ऋ० १६। (भ) सू० ४३, ऋ० १५। (म) सू० ४०, ऋ० ९। (य) सू० ४०, ऋ० ५।

जागत(क)स्त्रैष्टुभा(ख)न्येन व्यत्यस्तान्युत्तराणि षट् ॥१३॥
तत्राद्य द्वित्रिष्टुब(ग)न्तं सूक्तं प्रक्षयेव्यदः ।
त्रिष्टुबन्त्या(घ) तृतीयस्याद्यच मार्कं द्वितीयया(ङ) ॥१४॥
विद्य(च) आनुष्टुभं सूक्तं तेभ्य पञ्चर्चमुत्तर(छ) ।
आद्या(ज)स्तिस्रो गायत्र्य उत्तरस्त्रोष्णिहश्च षट्(झ) ॥१५॥
त्रिष्टुभस्तु जगत्यो वा तिस्र(ञ)श्चान्त्ये(ट) अनुष्टुभौ ।
उद्धृत्य पौलमीं पङ्क्तिं षष्ठी(ठ)मानुष्टुभं परं ॥१६॥
को वेदसूक्ते गायत्र्या चाष्टमी द्वादशी(ड) च या ।
तृतीया(ढ) नुष्टुभेवास्य द्वितीया(ण) बृहतीत्रिष्टुप् ॥१७॥
पञ्चमीपञ्चदश्यादी(त)प्रगाथौ काकुभौ द्वचौ ।
ककुभः प्रथमा यास्य दशम्येकादशी(थ) च या ॥१८॥
त्रिष्टुप् सप्तदश्योऽन्या(द) स्तुतुर्या.(ध) पुरउष्णिह ।
चतुर्थ्यास्तु वाकस्य जागते द्वे उपोत्तमे(न) ॥१९॥
उपान्त्या(प) प्रथमे त्रिष्टुबुत्तमा तूत्तरे(फ)त्वयो ।

---

(क) सू० ४४, ४६, ४८। (ख) सू० ४५, ४७, ४९। (ग) सू० [illegible] ऋ० १४, १५। (घ) सू० ४६ ऋ० ८। (ङ) सू० ४६, ऋ० २। (च) सू० ५०। (छ) सू० ५०, ऋ० ५। (ज) सू० ५१, ऋ० १, २, ३, ४। (झ) सू० ५१, ऋ० ५, ६, ७, ८, ९, १०। (ञ) सू० ५१, ऋ० ११, १२, १३। (ट) सू० ५१, ऋ० १४, १५। (ठ) सू० ५२, ऋ० ६ १६। (ड) सू० ५२, ऋ० ८, १२। (ढ) सू० ५३, ऋ० २। (ण) सू० ५३, ऋ० २। (त) सू० ५३, ऋ० ५, ६, १५, १६। (थ) सू० ५३, ऋ० १, १०, ११। (द) सू० ५३, ऋ० ७, ९, १३, १४। (ध) सू० ५३, ऋ० ४। (न) सू० ५४, ५५। (प) सू० ५४, ऋ० १४। (फ) सू० ५५, ऋ० १०।

उत्तम(क) बार्हतं तस्य प्रगाथौ बार्हतौ तृचौ ॥२०॥
द्वितीयाप्रभृतिः(ख)पूर्वः षष्ठीप्रभृति(ग)रुत्तरः।
उत्तराणि तु चत्वारि (घ)व्यत्यस्तानि यथैव षट् ॥२१॥
द्विस्त्रिष्टुबन्त्यं(ङ) तृचाद्यं द्विजगत्य(च)न्त्यमुत्तमम्।
यदुत्तरं(छ) मध्यमयोस्तत्रापि त्रिष्टुबुत्तमा ॥२२॥
सूक्तं केष्ठे(ज)ति गायत्रमनुष्टुप्तस्य पञ्चमी(झ)।
एका मतोष्टत्यस्य नवमी(ञ)त्रैष्टुभं परम्(ट) ॥२३॥
ऋतस्य(ठ) जागतं सूक्तं चत्वार्यो(ड)नुष्टुभान्यथ।
गायत्रं(ढ) त्रैष्टुभं(ण) च द्वे गायत्रे(त) चैक(थ)मौष्णिहम् ॥२४॥
आनुष्टुभे(द)च पाङ्क्तं(ध) च त्रैष्टुभे चोत्तरे(न) ततः।
एक(प)मानुष्टुभं तस्य प्रथमा(फ)स्तिस्र उष्णिहः ॥२५॥
अग्निर्यदा(ब)मिति त्रिष्टुपा तत्र प्रतीयताम्।
सप्तोत्तराणि सूक्तानि पाङ्क्तं(भ) त्रैष्टुभ(म)जागते(य) ॥२६॥

---

(क) सू० ५५। (ख) सू० ५६, ऋ० २, ३। (ग) सू० ऋ० ५६, ६, ७। (घ) सू० ५७, ५८, ५९, ६०। (ङ) सू० ५७, ऋ० ७, ८। (च) सू० ६०, ऋ० ७, ८। (छ) सू० ५९, ऋ० ८। (ज) सू० ६१। (झ) सू० ६१, ऋ० ५। (ञ) सू० ६१, ऋ० ९। (ट) सू० ६२। (ठ) सू० ६३। (ड) सू० ६४, ६५, ६६, ६७। (ढ) सू० ६८। (ण) सू० ६९। (त) सू० ७०, ७१। (थ) सू० ७२। (द) सू० ७३, ७४। (ध) सू० ७५। (न) सू० ७६, ७७। (प) सू० ७८। (फ) सू० ७८, ऋ० १, २, ३। (ब) सू० ७८, ऋ० ४। (भ) सू० ७९। (म) सू० ८०। (य) सू० ८१।

गायत्रं(क) त्रैष्टुभे (ख)च द्वे मध्ये चानुष्टुभं(ग) तयोः ।
जागतोऽच्छावदेत्यस्मिन्विहचा(घ)निति यस्तृचः ॥२७॥
तत्सवितुर्वृणीमहे(ङ) यत्पर्जन्ये(च)त्यनुष्टुभौ ।
उपोत्तमस्य सूक्तस्य विराट्पूर्वा त्वगुत्तमा(छ) ॥२८॥
शिष्टा अनुष्टुभः सर्वा अतिजागतमुत्तमम्(ज) ।

इति पञ्चमं मण्डलम् ।

---

(क) सू० ८२। (ख) सू० ८३, ८५। (ग) सू० ८४। (घ) सू० ८१, ऋ० २, ३, ४। (ङ) सू० ८२, ऋ० १। (च) सू० ८३, ऋ० ६। (छ) सू० ८६, ऋ० ६। (ज) सू० ८७।

# अथ षष्ठं मण्डलम् ।



त्रैष्टुभेष्वष्टमं सूक्तं भरद्वाजस्य जागतम् ।
अद्येभिस्त्वे(क) त्येतास्त्वथ समुद्धृत्य तूत्तमाम् ॥१॥
सप्तमं(ख) द्विजगत्यन्तं त्वं शतानीति शक्वरी(ग) ।
चतुर्दशं द्वितीयस्य सूक्ते आनुष्टुभे उभे ॥२॥
अच्छा नो(घ)ऽभिप्रयांसी(ङ)ति शक्वर्यावेव ते उभे ।
जगत्यौ(च) शक्वरी निचृज्जगत्या(छ)वतिशक्वरी(ज) ॥३॥
एतौ पञ्चदशस्य द्वौ जागतस्त्वादितस्तृचः ।
अनुष्टुप्सप्तदश्य(झ)स्य बृहत्यष्टादशी(ञ)निचृत् ॥४॥
षट्चत्वारिंश्य(ट)स्य त्रिष्टुप् गायत्रे सति षोडशे ।
सप्तविंश्युत्तमे च द्वे तिस्र एता अनुष्टुभः(ठ) ॥५॥
चाद्या वर्धमाना(ड)स्य षष्ठी चापि प्रतीयताम् ।
एका सप्तदशस्यान्त्या(ढ) द्विपदा दशमस्य(ण) च ॥६॥

---

(क) सू० ८, ऋ० ७ । (ख) सू० ७, ऋ० ६, ७ । (ग) सू० २, ऋ० ११ । (घ) सू० १४, ऋ० ६ । (ङ) सू० १५, ऋ० १५ । (च) सू० १५, ऋ० १, २ । (छ) सू० १५, ऋ० ३ । (ज) सू० १५, ऋ० ६ । (झ) सू० १५, ऋ० १७ । (ञ) सू० १५, ऋ० १८ । (ट) सू० १६, ऋ० ४६ । (ठ) सू० १६, ऋ० २७, ४७, ४८ । (ड) सू० १६, ऋ० १, ६ । (ढ) सू० १७, ऋ० १५ । (ण) सू० १०, ऋ० ७ ।

द्यौर्न सूक्त गता या तृचिपिमो(क) रिति सा विराट् ।
आ गाव इति सूक्तस्य द्वितीयामष्टिरेव च ॥७॥
जागत(ख)स्त्रैष्टुभस्यास्य तथैवानुष्टुबुत्तमा(ग) ।
आनुष्टुभ(घ) बृहत्यन्त(ङ) प्रत्यक्षा इति सूक्तत ॥८॥
षष्ठी(च)स्त्रिष्टुप् पर यत्तु तस्यादौ पङ्क्त्यनुष्टुभ(छ) ।
विराज(ज)स्सूक्तगामित्रस्यास्या मध्येव वा विराट्(झ) ।९॥
य आमयदिति तस्मिन् गायत्र्यनुष्टुबुत्तमा(ञ) ।
पुरुतम(ट)मिति शेषा तथैवाभिनिचृन्मता ॥१०॥
त्वामिद्धिसूक्ते प्रगाथे प्रगाथा बार्हता(ठ)वुभा ।
स्वादुष्किलेति सूक्तस्य जगती सप्तविंश(ड)च ॥११॥
चतुर्विंशी(ढ) तु गायत्री त्रयोविंशी(ण)त्यनुष्टुबृक् ।
ऊनविंशी(त) बृहत्यस्य गायत्र्या द्विपदोत्तरा(थ) ॥१२॥
स्तुषे जनमिति तस्य शक्वर्येकोत्तमा(द) निचृत् ।
आदित्त पृश्निसूक्तस्य प्रगाथौ बार्हतौ(ध) द्वयौ ॥१३॥

---

(क) सू० २०, ऋ० ७। (ख) सू० २८, ऋ० १, २, ३। (ग) सू० २८ ऋ० ८। (घ) सू० ४२, ऋ० १, २, ३। (ङ) सू० ४२, ऋ० ४। (च) सू० ४३। (छ) सू० ४४, ऋ० १ २, ३ ४, ५, ६। (ज) सू० ४४, ऋ० ७, ८, ९। (झ) सू० ४४ ऋ० ८। (ञ) सू० ४५, ऋ० ११। (ट) सू० ४५ ऋ० २९। (ठ) सू० ४६, ऋ० ६, ७। (ड) सू० ४७, ऋ० २७। (ढ) सू० ४७, ऋ० २४। (ण) सू० ४७, ऋ० २३। (त) सू० ४७, ऋ० १९। (थ) सू० ४७ ऋ० २५। (द) सू० ४८, ऋ० २५। (ध) सू० ४८, ऋ० १, २।

बृहती[क] जगती[ख] त्रिष्टु[ग]ब्जगती[घ] चोत्तरा तृचः।
उत्तरौ च प्रगाथौ द्वौ तृचौ बार्हत[ङ]काकुभौ[च] ॥१४॥
अष्टादश्यौ त्रयोदश्योरन्तरा[छ] पुरउष्णिहः।
बृहत्य[ज]तिजगत्यौ[झ] च प्रगाथश्चैव काकुभः[ञ] ॥१५॥
द्वे बृहत्यौ[ट] त्रिष्टुबे[ठ]कानुष्टुप[ड]च्चोत्तरा तृचः।
महासतोबृहत्यौ[ढ] च महा च बृहतीद्वयम्[ण] ॥१६॥
जगती[त] त्रिष्टुबि[थ]त्याभ्यां शब्दाभ्यामत्र लुप्यते।
पञ्चमस्यानुवाकस्य दशममृच चौष्णिहः[द] ॥१७॥
तृतीयस्य तु गायत्र्यो विश्वेदेवास ए[ध]ति षट्।
गायत्रं[न] पञ्च सूक्तानि चतुर्थप्रभृतीन्यथ ॥१८॥
विश्वेदेवासमस्मा[प]आद्यो जगत्यावेव[फ] ते उभे।
आ ते स्वस्ति[ब]मपि पन्था[भ] यां पूष[म]न्नित्यनुष्टुभः ॥१९॥

---

(क) सू॰ ४८, ऋ॰ १। (ख) सू॰ ४८, ऋ॰ ३। (ग) सू॰ ४८, ऋ॰ ५। (घ) सू॰ ४८, ऋ॰ ९। (ङ) सू॰ ४८, ऋ॰ १०। (च) सू॰ ४८, ऋ॰ ११। (छ) सू॰ ४८, ऋ॰ १३, १८। (ज) सू॰ ४८, ऋ॰ १४। (झ) सू॰ ४८, ऋ॰ १५। (ञ) सू॰ ४८, ऋ॰ १६। (ट) सू॰ ४८, ऋ॰ १९, २०। (ठ) सू॰ ४८, ऋ॰ २१। (ड) सू॰ ४८, ऋ॰ २२। (ढ) सू॰ ४८, ऋ॰ ६, ८। (ण) सू॰ ४८, ऋ॰ ७, २१। (त) सू॰ ४९, ऋ॰ १५। (थ) सू॰ ४९, ऋ॰ १, २, ३, ४, ५, ६, ७, ८, ९, १०, ११, १२, १३, १४। (द) सू॰ ५१, ऋ॰ १३, १४, १५। (ध) सू॰ ५०, ऋ॰ ७, ८, ९, १०, ११, १२। (न) सू॰ ५३, ५४, ५५, ५६, ५७। (प) सू॰ ५०, ऋ॰ १४। (फ) सू॰ ५८, ऋ॰ २। (ब) सू॰ ५६, ऋ॰ ९। (भ) सू॰ ५१, ऋ॰ १६। (म) सू॰ ५७, ऋ॰ ८।

बार्हतं द्वयमं(क) तस्य चतस्रोऽन्त्या अनुष्टुभः(ख) ।
त्रिष्टु(ग)ब्बृहत्य(घ)नुष्टुप्(ङ) च परस्य तृच उत्तमः ॥२०॥
गायत्रस्य ततोऽन्यास्तु त्रिष्टुभस्तिस्र(च) आदितः ।
गायत्रमुत्तमं(छ) सूक्तं त्रिष्टुभ(ज)श्चोत्तमा विराट् ॥२१॥
जगत्यः प्रथमास्तिस्र(झ)स्तथा चान्त्या त्रयोदशी(ञ) ।
षष्ठस्य त्वनुवाकस्य पञ्च त्रिष्टुभ(1) उत्तमाः(ट) ॥२२॥
उद्धृत्याशिरिषे(ठ)त्येकान्तृचौ च द्वे उपोत्तमे ।
सप्तमस्य तु सूक्तस्य जगत्यौ द्वे उपोत्तमे(ड) ॥२३॥
नवमं(ढ) जागतं सूक्तं दशमे(ण)चादितस्तृचः ।
उत्तमस्य जगत्यौ तु षष्ठी(त) च दशमी(थ) च या ॥२४॥
एका सप्तदशी(द) पङ्क्तिः संवायते(ध)ति प्रकरी ।

इति षष्ठं मण्डलम् ॥

---

(१) अनुष्टुभ इति भ-पुस्तके पठ्यते ।

(क) सू० ५८ । (ख) सू० ५८, ऋ० ७, ८, ९, १० । (ग) सू० ६०, ऋ० १३ । (घ) सू० ६०, ऋ० १४ । (ङ) सू० ६०, ऋ० १५ । (च) सू० ६०, ऋ० १, २, ३ । (छ) सू० ६१ । (ज) सू० ६१, ऋ० १४ । (झ) सू० ६१, ऋ० १, २, ३ । (ञ) सू० ६१, ऋ० १३ । (ट) सू० ६३, ६४, ६५, ६६, ६७ । (ठ) सू० ७५, ऋ० १४, १५, १६ । (ड) सू० ६८, ऋ० १०, ११ । (ढ) सू० ७० । (ण) सू० ७१, ऋ० १, २, ३ । (त) सू० ७५, ऋ० ६ । (थ) सू० ७५, ऋ० १० । (द) सू० ७५, ऋ० १७ । (ध) सू० ६६, ऋ० १० ।

## अथ सप्तमं मण्डलम् ।

त्रैष्टुभे तु वसिष्ठस्य विराजोऽष्टादश(क)दितः ।
प्रथमस्यानुवाकस्य द्वैपदं सूक्तमुत्तमम्(ख) ॥१॥
चतुर्दशं द्वचत्यादि(ग) तस्माद्गायत्रमुत्तरम्(घ) ।
प्रगाथं बार्हतं सूक्तं द्वादशर्चमुपोत्तमम्(ङ) ॥२॥
द्वितीयस्यानुवाकस्य तेषु तेषामुपोत्तमम्(च) ।
प्रगाथमेषामुद्धृत्य द्वितीया द्विपदास्त्वयम्(छ) ॥३॥
वैराजं पञ्चमं(ज) सूक्तं त्रिष्टुभस्योत्तमा(झ) स्त्रिचत् ।
गायत्रं(ञ) त्रिविराडन्तं(ट) द्वादशर्चं चतुर्दशम् ॥४॥
तृतीयस्यानुवाकस्य चतस्रोऽ(ठ)न्त्या अनुष्टुभः ।
षष्ठमस्य तु सूक्तस्य गायत्री प्रथमा(ड) पुनः ॥५॥
उपरिष्टाद्बृहत्यन्तु तिस्रो(ढ)मध्यगता स्त्रयः ।
आद्यावाद्यस्य सूक्तस्य द्विपदा एकविंशतिः(ण) ॥६॥

---

(क) सू० १, ऋ० १, २, ३, ४, ५, ६, ७, ८, ९, १०, ११, १२, १३, १४, १५, १६, १७, १८। (ख) सू० १७। (ग) सू० १४, ऋ० १। (घ) सू० १५। (ङ) सू० १६। (च) सू० ३२। (छ) सू० ३२, ऋ० ३। (ज) सू० ३३। (झ) सू० ३३, ऋ० ९। (ञ) सू० ३१। (ट) सू० ३१, ऋ० १०, ११, १२। (ठ) सू० ५५, ऋ० ५, ६, ७, ८, । (ड) सू० ५५, ऋ० १। (ढ) सू० ५५, ऋ० २, ३, ४। (ण) सू० ३४, ऋ० १, २, ३, ४, ५, ६, ७, ८, ९, १०, ११, १२, १३, १४, १५, १६, १७, १८, १९, २०, २१।

अष्टमस्य जगत्याद्या(ङ) सूक्तस्यैकादशस्य(च) च ।
त्रयोदश जागत तु सूक्त सप्तदश(छ) च यत् ॥७॥
तयो पूर्वे(ज) त्रिष्टुबन्त सक्थ्यन्तमथोत्तरम्(झ) ।
चतुर्थस्यानुवाकस्य प्रगाथा बार्हता(ञ)स्मृता ।८॥
सूक्तस्यानुष्टुबन्तस्य(ट) चतुर्थ्यादितस्तु च ।
मारुतस्तत्र गायत्रमृक्च सान्तपना(ठ) इति ॥९॥
एकादश्या(ड)द्वौ सूक्तस्य द्विपदा प्रथमस्य तु ।
एकादशस्य तिस्रो(ढ)ऽन्त्या गायत्र्यो मत्र(ण)वादित ॥१०॥
प्रगाथा बार्हता ज्ञेया(त) पुरउष्णिक् षोडशी(थ) ।
त्रयोदश(द) तु वैराजस्त्वानुष्टुप्य सप्तमे(ध) ॥११॥
पञ्चमस्यानुवाकस्य गायत्र सूक्तमुत्तमम्(न) ।
एकादशे(प) चतुर्थे(फ) च प्रगाथा बार्हतास्मृता ॥१२॥
ऐन्द्रावरुणे द्वे सूक्ते(ब) दशमे जागते उभे ।

---

(ङ) सू० ३१, ऋ० १ । (च) सू० ३३, ऋ० १ । (छ) सू० ५० ।
(ज) सू० ३६ । (झ) सू० ४०, ऋ० ३ । (ञ) सू० ४६, ऋ० ३, ५ ।
(ट) सू० ४८ ऋ० १२ । (ठ) सू० ५६, ऋ० ९, १०, ११ । (ड) सू० ५६, ऋ० १, २ ३ ४ ५, ६ ७ ८, ९, १०, ११ । (ढ) सू० ६६, ऋ० १७, १८, १९ । (ण) सू० ६६, ऋ० १, २, ३, ४, ५, ६, ७, ८, ९ ।
(त) सू० ६६, ऋ० १० ११, १२, १३, १४ १५ । (थ) सू० ६६, ऋ० १६ ।
(द) सू० ६८, ऋ० १, २, ३, ४, ५, ६, ७ । (ध) सू० ६८, ऋ० ८, ९ ।
(न) सू० ८९ । (प) सू० ८१, ऋ० १, २ ३ । (फ) सू० ७४ ऋ० १, २, ३ । (ब) सू० ८२, ८३ ।

उत्तमस्य तु सूक्तस्य दशमी निचृदुत्तमा[क] ॥१३॥
षष्ठस्य त्वनुवाकस्य प्रगाथो बार्हतो[ख] द्व्यृचः ।
एका[ग] प्रस्तारपङ्क्तिश्च सप्तमस्यादितस्तृचः ॥१४॥
गायत्र्य उत्तरास्तिस्रः[घ] पार्जन्यं च त्रयोदशम्[ङ] ।
पञ्चमं[च] चोत्तमामेका[छ] मुद्धृत्यर्चमनुष्टुभम् ॥१५॥
उत्तमस्योत्तमा[ज] नुष्टुब्जगत्यष्टादशी[झ] निचृत् ।
एकविंशीत्रयोविंश्यौ[ञ] तयोभे सप्त[ट] चादितः ॥१६॥
उपोत्तमा तु सूक्तस्य प्रथमैका[ठ] प्यनुष्टुबृक् ॥

इति सप्तमं मण्डलम् ॥

---

(क) सू० ८९, ऋ० ५। (ख) सू० ९६, ऋ० १, २। (ग) सू० ९६, ऋ० ३। (घ) सू० ९६, ऋ० ४, ५, ६। (ङ) सू० १०२। (च) सू० ९४। (छ) सू० ९४, ऋ० १२। (ज) सू० १०४, ऋ० २५। (झ) सू० १०४, ऋ० १८। (ञ) सू० १०४, ऋ० २१, २३। (ट) सू० १०४, ऋ० १, २, ३, ४, ५, ६, ७। (ठ) सू० १०३, ऋ० १।

